# बालनीतिकथाः

रचयिता

वैद्य. रामस्वरूपशास्त्री

सम्पादकः

नन्दनन्दनसनाढ्यः एम० ए०

बालसंस्कृतम् प्रकाशनम्

आगरा रोड, घाटकोपर, बम्बई-७७

# कथानां क्रमः


| | | |
|---|---|---|
| १. बालमनोरथः | ... | १ |
| २. आपत्सुवैराणि | ... | ३ |
| ३. दुर्जनो निन्दति | ... | ४ |
| ४. सत्यं विजयते | ... | ५ |
| ५. पुण्यश्लोको नलो राजा | ... | ७ |
| ६. मिथः साहाय्यम् | ... | ९ |
| ७. न वेत्ति मूढो गुणम् | ... | १० |
| ८. सुस्थाने शोभते योग्यः | ... | १२ |
| ९. ईश्वरे विश्वासः | ... | १४ |
| १०. मूढः कलहायते | ... | १६ |
| ११. सर्वं वर्ज्यमतिमात्रम् | ... | १८ |
| १२. विश्वासो नैव कर्त्तव्यः | ... | २१ |
| १३. सतां सङ्गः | ... | २३ |
| १४. प्रत्युत्पन्नमतिर्वैश्यः | ... | २६ |
| १५. भ्रातरौ | ... | २९ |



पुस्तकस्यास्य सर्वेऽधिकाराः स्वाधीनाः सन्ति



द्वितीयं मुद्रणम् ] [ १ मई ख्रिस्ताब्दाः १९६३

प्रकाशकः—

वैद्यः-रामस्वरूपशास्त्री

बालसंस्कृतं कार्यालयः, आगरा रोड, घाटकोपर, बम्बई-७७

मुद्रकः—

सार्वदेशिकप्रेस, दरियागंज, दिल्ली-७

# बालनीतिकथाः

पञ्चमो भागः

## शतमनोरथः

आसीत् पुरा वाराणस्यां शतमनोरथो नाम ब्राह्मणः। स नित्यं भिक्षां चरति स्म। स भिक्षया लब्धेन चूर्णेन घटमपूरयत्। तस्य कुटीरे मूषिकाः आसन्। तेषां भयात् स तं घटं नागदन्ते आरोप्य, अधः खट्वां निधाय तस्य रक्षामकरोत्। एकदा रात्रौ शयानः सोऽचिन्तयत्—'परिपूर्णोऽयं वर्तते मम घटः गोधूमस्य चूर्णेन। यदि दुर्भिक्षो भवेत्, तर्हि अनेन रूप्यकाणां शतमुत्पद्येत। ततः तेनाजाद्वयं क्रेष्यामि। ततः प्रतिपाण्मासिकात् प्रसवात् छागीनां यूथं भविष्यति। ततश्छागीभिः प्रभूताः गाः ग्रहीष्यामि। गोभिः महिषीः, महिषीभिः वडवाः,

वडवानां प्रसवतः प्रभूता अश्वा भविष्यन्ति। तेषां विक्रयादनल्पं स्वर्णं भविष्यति। स्वर्णेन चतुःशालं गृहं निर्मास्यामि। ततः कश्चिद् ब्राह्मणः मम गृहमागत्य युवतिं रूपाढ्यां कन्यां दास्यति। तस्याः सकाशात् पुत्रो मे भविष्यति। अहं सिद्धमनोरथः इति तस्य नाम करिष्यामि। ततः स जानुभ्यां प्रसर्पणयोग्यः भविष्यति। अहं चाश्वशालायाः पृष्ठे देशे उपविश्य पुस्तकं वाचयिष्यामि। अत्रान्तरे सिद्धमनोरथशर्मा मां वीक्ष्य मातुः उत्सङ्गात् जानुरिङ्गणपरः अश्वानां खुरासन्नवर्ती शनैः शनैः मम समीपमागमिष्यति। ततोऽहं कोपेन ब्राह्मणीं कथयिष्यामि—'गृहाण बालकम्' इति। सा तु गृहकर्मणि व्यग्रचित्ता मम वचनं न श्रोष्यति। तत उत्थायाहं तां पादप्रहारेण ताडयिष्यामि। एवंविधान् शतशः मनोरथान् कृत्वा ध्याने मग्नः स तथा पादप्रहारमकरोत्, यथा स घटः भग्नः, स्वयं च गोधूमचूर्णेन पाण्डुरतामगच्छत्। अतः कथयन्ति विद्वांसः—

> चिन्तानोऽनन्तपुष्पाणि मालायुग्मं य इच्छति।
> भग्नकार्यः स जायेत यथा शतमनोरथः॥

---

# आपत्सु वैराणि

कस्मिश्चिद् वने बहवो मृगा अवसन्। एकदा कश्चिद् आखेटिकः तद् वनमविशत्। स तत्र नदीं गच्छता मार्गेण प्रयातान् बहून् मृगान् अपश्यत्। स तेषां मार्गे जालमतनोत्। अचिरादेव एको मृगो जलार्थी सरितं गच्छन् तस्मिन् जालेऽपतत्। स तत्र बद्धोऽभवत्। ततः स महता प्रयत्नेन दन्तैः पाशं छित्वा कथंचिद् आत्मानं विमोच्य व्याधभयात् जलमपीत्वैव ततः पलायितुमारभत। भयभीतः स दुर्गमेणारण्यमार्गेण धावन् दावाग्निना ज्वलन्तं वनमविशत्। तदपि महता कष्टेन समुल्लंघ्य पुनरपि धावमानः प्राणपरीप्सुरभवत्।

अत्रान्तरे कोऽपि मृगयुरागत्य वेगेन तस्योपरि शरान् प्रावर्षन्। ततो भीतः स हरिणः परमेण जवेन धावन् तस्माद् व्याधाद् आत्मानमरक्षत्। ततः सवेगं पलायमानः स दुर्दैवहतको मृगः कुत्रापि पुराणकूपे पतित्वा म्रियमाण एवमपाठीत्—

एकस्य दुःखस्य न यावदन्तं
तावद् द्वितीयं समुपस्थितं मे।
आपत्सु वैराणि समुल्लसन्ति
छिद्रेष्वनर्था बहुलीभवन्ति ॥

# दुर्जनो निन्दति

एकस्मिन् वने कश्चित् शृगालः अवसत्। बुभुक्षितः स चिरम् इतस्ततः अभ्रमत्, तथापि न किमपि खाद्यं प्राप्तवान्। ततः सः एकां द्राक्षालताम् अपश्यत्। सा लता तुङ्गायां भित्तौ समारूढा अभवत्। लतां दृष्ट्वा शृगालः अचिन्तयत्—अहो! मे सौभाग्यम्! लब्धं मया मधुरं भोजनम्। द्राक्षाः पक्वाः सन्ति। इमाः अहं सुखेन भक्षयिष्यामि। अद्य तृप्तिः भविष्यति।

अहो! विशाला इयं वल्लरी। यस्यां बहूनि द्राक्षागुच्छानि वर्तन्ते, इति चिन्तयन् यावत् शृगालः द्राक्षागुच्छमेकं लब्धुं ग्रीवाम् उन्नतां करोति, तावत् निराशः संजायते। 'हा! हतोऽस्मि' इति सः अवादीत्। 'किं करोमि, कथं करोमि, कः उपायः इमानि द्राक्षाफलानि लब्धुम्। सुदूरमुच्चैः सन्ति द्राक्षाफलानि। सः पुनः पुनः पश्चिमाभ्यां पादाभ्यां तिष्ठन् तानि द्राक्षाफलानि लब्धुं यत्नम् अकरोत्। भूयोभूयः उत्पतति निपतति च। ततः स श्रान्तः संजायते, निराशो भूत्वा निवर्तते च। स अकथयत्—'अम्लानि खलु इमानि द्राक्षाफलानि, नाहं अपक्वानि एतानि भक्षयितुम् इच्छामि' इति।

एवमेव लोके दुर्जनाः सुवस्तूनि लब्धुम् अशक्ताः तानि दूषयन्ति। अत एव उक्तं कविना—

दुर्जनाः सज्जनस्थानं लब्धुं कुर्वन्ति दूषणम्।
अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते॥

# सत्यं विजयते

एकः चौरः आसीत्। स चौर्येण जीवति स्म। गृहे तस्य भार्या आसीत्, पुत्रा आसन्, धनानि पशवश्च आसन्। गच्छता कालेन स वृद्धः अभवत्। एकदा तस्य भार्या तमकथयत्—स्वामिन्! आवां वृद्धौ स्वः। चौर्यं कुर्वतोः आवयोः वयसी व्यतीते। नगरस्य जनाः तीर्थानि गच्छन्ति, दानानि ददति, देवान् च अर्चन्ति। आवां तु न किमपि अन्यजन्मने अनुतिष्ठावः। अद्य पूर्णिमा तिथिः, जनाः गङ्गास्नानार्थं यान्ति। तद् आवामपि किं न गङ्गां याव, सा हि सर्वाणि पापानि हरति कल्याणकरी देवतानामपि। यथोच्यते—

यद्यपि दिशि दिशि सरितः परितः परिपूरिताम्भसः सन्ति।
तदपि पुरन्दरतरुणीसङ्गतिसुखदायिनी गङ्गा॥

इति चिन्तयन्तौ तौ गङ्गास्नानार्थं हरिद्वारं प्रस्थितौ। अन्यस्मिन् प्रभाते च तौ गङ्गातटम् अनुप्राप्तौ। तौ पर्वस्नानं विधाय तीर्थब्राह्मणेभ्यः धनं भोजनं वस्त्राणि च अयच्छताम्। ततः तौ तटस्य नातिदूरे कुट्यां स्थितं कंचन महान्तं साधुमपश्यताम्। तौ च तं प्रणम्य फलानि उपाहरताम्। महात्मा च 'सत्यं वद, धर्मं चर' इति उपादिशत्।

ततस्तौ गृहं प्रत्यागच्छताम्। महात्मनः उपदेशेन चौरः सदैव सत्यं वदन्ति, धर्मं च आचरति, गीतां च पठति, शृणोति च गीतापाठशालां गत्वा धर्मशास्त्रोपदेशान्, अनुतिष्ठति च जीविकार्थे—'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन, स्वधर्मे

निधनं श्रेयः परधर्मो भयावहः' इत्यादीनि भगवतो वचनानि अनुस्मृत्यानुस्मृत्य सदैव चौर्यम् ।

एकदा चौर्यार्थी स राजभवनम् अविशत् । तत्रत्यो राजाऽपि जागरूकः आसीत् । स रात्रौ गुप्तचरो नगरस्य रक्षामकरोत् । मार्गे गच्छतोः तयोः समागमोऽभवत् । चौरः स्वस्य परिचयम् अददात् । राजा तु छलेन—'अहमपि चौरोऽस्मि' इति तव मित्रमस्मि । राजप्रासादे अद्य चौर्यं करिष्यावः, भविष्यावश्चावां लब्धेः समभागभाजौ' इति तमवादीत् ।

ततः तौ चलितौ, सम्प्राप्तौ च राजप्रासादम् । राजा प्रहरी भूत्वा निभाल्यमान इव तस्य रक्षोपायान् द्वारदेशे अतिष्ठत् । चौरः प्रासादमविशत् । स क्षणान् निवृत्त्य राज्ञो हस्ते रत्नमेकं निधाय अवादीत्—'मित्र ! नृपस्य कोषे त्रीणि रत्नानि आसन् । आवयोः विभाजने असुविधा भवेद् इति कृत्वा मया द्वे एव आनीते। इदमेकं मम, द्वितीयं च तव भविष्यति' इति ।

ततस्तौ मिथो कृताभिवादनौ गृहम् अगच्छताम् । राजाऽप्यन्येन मार्गेण प्रासादम् अविशत् । स स्वस्य कोषं गत्वा अपश्यद् रत्नमेकम् । स चौरस्य सत्यभाषणेऽतीव तुष्टोऽभवत् । प्रभाते स चौरमाकारयित्वा सादरं मन्त्रिस्थाने न्ययोजयत् । चौरः योग्य आसीत् । स राज्ञा दत्तं मन्त्रिपदं सुखेन वहति स्म ।

इत्थं च सत्यं सर्वत्र विजयते । यथोच्यते—

गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः ।
अलुब्धैः दानशीलैश्च सप्तभिः धार्यते मही ॥

# पुण्यश्लोको नलो राजा

आसीत् पुरा निषधाधिपो महान् यशस्वी राजा नलः। स धीरो वीरो दान्तः शान्तो दयालुः धर्मज्ञश्चाभवत्। तस्य गुणैः आकृष्टा नृपतेः भीमसेनस्य पुत्री परमा सुन्दरी दमयन्ती नाम इन्द्रवरुणकुबेरादीन् देवानपि विहाय तं वरयति स्म। ततस्तयोः विवाहोऽभवत्। तौ च दम्पती राज्यसुखानि अन्वभवताम्।

राज्ञः नलात् पराभूता देवा रुष्टा अभवन्। विशेषेण कलिः दमयन्तीलाभेन वञ्चितोऽतिशयं क्रुद्धोऽभवत्। स राजानं नलमुपपीडयितुं मनो दधे। स राज्ञः मनसि प्राविशत्। कलिना उपहतः स राजा चित्तविक्षेपमुपलेभे। स स्वभ्रात्रा पुष्करेण सह द्यूते पराजितः सर्वस्वं राज्यं चापि हारितवान्।

ततः स भार्यया दमयन्त्या सह वनमगच्छत्। तदा तस्य भोक्तुमन्नं परिधातुं वस्त्राणि चापि नासन्। स दिगम्बरो भूत्वा वनेऽभ्राम्यत्। स घोरे वने प्रियां पत्नीं दमयन्ती-मत्यजत्। अनन्तरं कर्कोटकेन महासर्पेण दष्टः स विरूपता-

मगच्छत् । वामनो विरूपः स अयोध्याधिपं राजानमृतुपर्णं शरणमगच्छत् । स बाहुकः इति नाम्ना अयोध्यामहीपतेः सारथितामभजत् ।

अस्मिन् अन्तरे बहूनि दुःखानि सहमाना दमयन्ती महता कष्टेन पितुः भीमसेनस्य गृहमाप्नोत् । सा सुतरां पत्युः अन्वेषणपरा 'दमयन्ती पुनः स्वयंवरे पतिं वरिष्यति' इति कृतकं घोषमघोषयत् । भैम्याः पुनः स्वयंवरस्य निमन्त्रणं लब्ध्वा बाहुकसारथिरयोध्यामहीपतिः नृपतेः भीमसेनस्य राजधानीं सजवेन रथेन प्रायात् । मार्गे देवा नलस्य विरूपतामपहृत्य तस्मै स्वं रूपमयच्छन् । स स्वस्थः प्रकृतिस्थश्चाभवत् ।

कुण्डिनपुरे स्वयंवरो नाभवत् । ज्ञातरहस्यः अयोध्याधिपः भीमसेनश्चापि सञ्जातहर्षौ आस्ताम् । नलो दमयन्ती च पुनः लब्धपरिचयौ अजायेताम् । ततो लब्धराज्यः स राजा नलः सुखेन प्रजा अपालयत् । प्रजाः सुखान्यन्वभवन् ।

धर्मोपेताऽद्भुता सेयं कथा व्यासेन वर्णिता ।<br>
नलस्य नृपतेः सैषा मया चात्र प्रकीर्तिता ॥

# मिथः साहाय्यम्

एका पिपीलिका आसीत्। एकदा आहारार्थं भ्रमन्ती सा कमपि आम्रस्य पादपं समारोहत्। वृक्षस्य शाखासु धावन्ती सा अकस्माद् अस्खलत्, अपतच्च अधस्ताद् भरिते जलाशये। तस्मिन्नेव वृक्षे कस्यचित् कपोतस्य कुलायः अभवत्। स तत्र स्थितः जले निमज्जन्तीं पिपीलिकाम् अपश्यत्। म्रियमाणायां तस्यां पिपीलिकायां दयालुः स कपोतः शुष्कम् आम्रस्य दलमेकमपातयत्। तत् पत्रं जले अतरत्। पिपीलिका च तस्मिन्नारूढा सती स्वजीवितम् अरक्षत्, आविरकरोच्च कृतज्ञताम्। ततः तौ मित्रे अभवताम्।

ततः दिनेषु गच्छत्सु एकदा स कपोतः वृक्षस्य शाखायाम् एकाकी अतिष्ठत्, पिपीलिका च वृक्षस्य मूले स्वस्य बिलस्य द्वारि कर्मपरा अभवत्। तदैव कश्चिद् व्याधः आगत्य कपोतं हन्तुं धनुषि बाणसन्धानम् अकरोत्। पिपीलिका तमपश्यत्। सा धावन्ती व्याधस्य स्कन्धम् आरुह्य क्रोधेन तं तथा अदशत् यथा दंशपीडितः स व्याधः लक्ष्याद् अपाराध्यत्। धनुर्मुक्तः शरश्च अन्यां दिशम् अगच्छत्। तस्य शब्दं श्रुत्वा कपोतश्च उड्डीय वृक्षान्तरम् अयासीत्। एवं तौ विपदि परस्परं साहाय्यं कुर्वन्तौ चिरं सुखेन न्यवसताम्।

लोके खगा मृगाः कीटा ह्युपकुर्युः परस्परम्।
बालकाः! किं न कुर्यान्वमुपकारं परस्परम्॥

# न वेत्ति मूढोऽगुणम्

आसीत् पुरा धारायां महानगर्यां कश्चित् कृतधनो नाम महावणिक्। वसतेः बहिः तस्य फलोद्यानमासीत्। तस्मिन् बहुविधाः फलवृक्षा आसन्। ते सदैव प्रचुराणि फलानि फलन्ति स्म। फलानां विक्रयेण स विपुलं धनमार्जयत्। स धनिकः अभवत्। स विवाहम् अकरोत्। तस्य अपत्यानि च अजायन्त।

स उद्यानस्य एकस्मिन् कोणे इष्टिकामयं द्विभूमिकं भवनमकारयत्। स तत्र कूपं न्यखानयत्, गाः अपालयत्, क्षेत्राणि अक्रीणात्, हलं च अचालयत्, सारमेयं कुक्कुटं च अरक्षत्। तस्य द्वौ कर्मकरौ भृत्यौ च आस्ताम्। सारमेयः तस्य प्राहरिकः आसीत्। कुक्कुटः तं सदैव अतिप्रभाते एव अबोधयत्, भृत्यौ च समये तस्य कार्याणि अकुर्वाताम्।

कृतधनः परमः चतुरः श्रमशीलः व्यवसायी चाभवत्। तस्य कुक्कुटः निशायाः उत्तरार्धे चतुर्वादनसमये एव उच्चैः विरावमकरोत्। स तस्य निनादं श्रुत्वा विष्टराद् उत्थाय कृतशौचस्नानः नारायणस्य नामानि अजपत्। ततः सूर्योदयात् पूर्वमेव भृत्यौ अबोधयत्, न्ययोजयच्च तौ कार्येषु प्रातरेव।

भृत्यौ तस्य अलसौ आस्ताम्। तौ स्वामिनः कार्यं सम्यक् कर्तुं न अकामयेताम्। तौ अविनीतौ चाभवताम्। परन्तु वेतनलोभात् कार्याणि कर्तुं पराधीनौ आस्ताम्। तौ प्रातः विलम्बेन कार्याणि आरब्धुमैच्छताम्।

'एष कुक्कुटः वणिजं प्रातः एव प्रबोधयति, स च आवां तत्क्षणादेव कार्येषु नियोजयति। सोऽयं खलः कृकवाकुः अकारणवैरी कदर्थयति नः' इत्येवं विचारयन्तौ तौ तं ताम्रचूडं हन्तुं मनो दधातेतराम्। ततः तौ एकदा अवसरं लब्ध्वा तं कुक्कुटं जघ्नतुः। कुक्कुटस्य अभावेन वणिक् समयस्य ज्ञाने अन्ध इवाभवत्। तदा स समयेन कार्याणि कर्तुं न अपारयत्।

वणिजः गृहे घटीयन्त्रं नाभवत्। स कुक्कुटः एव तस्य समयनिर्देशकः आसीत्। मृते च ताम्रचूडे स कृतधनः कदाचित् निशीथे एव उत्थाय कार्ये लगति स्म प्रबोध्य च भृत्यौ अपि न्ययोजयत् चर्यासु।

तदा तौ पराधीनौ विलपन्तौ पश्चात्तापमकुर्वाताम्—हे साधो! ताम्रचूड! सुसमयज्ञ! त्वयि जीवति आवां सुखिनौ आस्व, त्वयि उपरते तु नौ परमदुःखिनौ संजातौ। अयं मूढोऽस्माकं स्वामी अर्धरात्रे एव कार्याणि समारभ्य दुःखदो जायते नः। तदा मूढौ आवां तव गुणान् न जानीवः स्म। सत्यमिदमुच्यते—

भद्रस्य जीवनदातुः वेत्ति कूपस्य नो गुणान्।
मूढः प्रशंसतेऽत्यन्तं शुष्के तस्मिन् पिपासितः॥

# सुस्थाने शोभते योग्यः

आसीत् पुरा वाराणस्यां शत्रुघ्नसिंहो नाम नृपः। स न्यायेन प्रजाः अपालयत्। सुचिरं राज्यं कुर्वतः तस्य जरा समागच्छत्। तस्य पुत्रो नासीत्, यस्मै स स्वस्य उत्तराधिकारं दद्यात्। तस्य बान्धवेष्वपि न कश्चिद् राजासने संस्थातुं योग्योऽभवत्।

उपरते राजनि सचिवाः अमन्त्रयन्। ते प्रजाभाग्येन यं कमपि समये आगन्तुकमेव राजानं कर्तुमैच्छन्। 'श्वस्तने प्रभाते यः कश्चित् प्रथमं नगरद्वारं विशेत्, स एव राजासने स्थापनीयः' इति तैः निर्णीतम्।

एवं निश्चिते अन्यस्मिन् प्रभाते दैवयोगात् कश्चिद् भिक्षुकः एव नगरद्वारमविशत्। मन्त्रिणस्तमेव राजानमकुर्वन्। भिक्षुकः स राजव्यवहारं कथं जानीयात्। अयोग्ये तस्मिन् राजनि राजसेवकाः स्वाधीना यथेच्छं राजकोषम् अलुण्ठन्। अधीनाः सामन्ताः करं न अददन्। सर्वाः प्रजा राजतस्करैः उत्पीडिता अभवन्। सचिवाः शासकंमन्या अभवन्।

राजसिंहासने न राजमानः नवीनः शासकः मूर्खैः चाटुकारैः पूजितोऽभवत्। प्रथमं तु स शासनसम्बन्धेऽनभिज्ञः किमपि कर्तुमेव नाजानात्, द्वितीयं च धैर्येण तेन किमपि कृतमपि अनुभवाभावात् सर्वथा विफलमेवाभवत्।

इत्थं च प्रजासु महान् असंतोषोऽजायत। सोऽपि भिक्षुराजो राजपुरुषाणां प्रपञ्चैः छलैश्च क्षुब्धोऽभवत्। एकस्मिन् दिने दैवयोगात् तस्य भिक्षुकराजस्य पूर्वतनः सखा राजद्वारं समागच्छत्। दत्तपरिचयः स राजानं द्रष्टुं कामयाञ्चकार। राजापि तमाहूय एकान्ते सर्वं स्ववृत्तान्तमकथयत्। सोपि मित्रस्य भाग्योदयेन राज्यप्राप्तौ परमां प्रसन्नतामदर्शयत्।

भिक्षुकराजस्तु तस्य प्रसन्नतां नाभ्यनन्दत्। स तु मम भाग्ये रोदितव्यं, दुर्भाग्योऽहं विपज्जाले पतितोस्मि। कदा परमेश्वरो ममोद्धारं करिष्यति। अहं तु भिक्षुकः एव भिक्षया कृतोदरपूर्तिः सन्तुष्टः सुखी चाभवम्। अस्मिन् राजासने तिष्ठन् अहं विविधानां चिन्तानां भाजनं संवृत्तोऽस्मि। अहं रुग्णोस्मि, दुर्बलोस्मि संजातः। चिन्तातुरस्य मम रात्रौ निद्रापि न समायाति। तदा तस्य मित्रं मनसि चकार—

सुस्थाने शोभते योग्यः परस्थाने न शोभते।<br>
पञ्जरे शोभते कीरः काकस्तत्र न शोभते॥

## ईश्वरे विश्वासः

आसीत् कश्चिद् वीरसिंहो नाम राजपुत्रः। स विदेशं गत्वा सेनायां समवेतोऽभवत्। स बहुषु युद्धेषु वैरिणः पराजित्य बहुशो राजसम्मानं विपुलं धनं चार्जत्। ततः स स्वदेशं प्रातिष्ठत्। ग्रामे वसन् स सर्वेषां कुटुम्बिनां बन्धूनां च प्रियोऽभवत्। तत्र स रूपगुणसम्पन्नाम् असमानां कुलेन क्षत्रियां कन्यां पर्यणैषीत्। मासं पितुः गृहे निवासं कृत्वा तौ दम्पती पुनः विदेशं प्रातिष्ठताम्।

नवोढया तया भार्यया सह वीरसिंहः स समुद्रमार्गेण यात्रां कुर्वन्नासीत्। यावत्तस्य पोतः मध्ये समुद्रं प्राप्नोति, तावत् महान् सामुद्रः झञ्झावातः प्रादुरासीत्। सर्वेऽपि पोतयात्रिणो भयभीता अधीराश्चाभवन्। वीरसिंहस्तु न कामपि भयचिक्रियां प्रादर्शयत्। प्रसन्नमुखः स भगवन्तं नारायणं ध्यायन् कृतमौनोऽभवत्। ततः पत्युः निश्चिन्तां मुखमुद्रां वीक्ष्य भयभीता भार्या तमपृच्छत्—'कथं भोः! निश्चिन्त इव प्रतीयते भवान्? पश्यतु एष झञ्झावातः शिरसि समागतः महाव्याल इव व्यादाय कालं करालं मुखम्।'

इत्थं प्रियतमायाः वचो निशम्य वीरसिंहः कोपात् खड्गमाकृष्य तस्याः शिरसि अपातयत्, अपृच्छच्च कृतमन्दस्मितः ताम्— 'ननु भीरो! वर्तते तव भयं ममास्मात् खड्गात्?' ततः शुचिस्मिता सा हरिणाक्षी प्राह—'ननु प्राणनाथ! मम

प्रश्नस्योत्तरं न दत्त्वैव परिहासं कर्तुं प्रवर्तते भवान्, प्रवर्ततां तावद् वर्तमानेन कालेन। अस्मात् तव हस्तस्थात् खड्गाद् कुतो मे भयम्? यतोऽहं भवतः प्राणवल्लभाऽस्मि।' इति श्रुत्वा वीरसिंहोऽवादीत्— 'प्रिये! यथा त्वं मम प्रियाऽसि, तथैव लोकोऽयं लोकनाथस्य भगवतः परमेश्वरस्य प्रियो वर्तते। यथा मम हस्तस्थात् शस्त्रात् तव भयं नास्ति तथैव जगन्नाथस्य प्रभोः वशे स्थितात् अस्माद् झञ्झावातात् मम भयं न वर्तते। अहं भगवति विश्वासात् निश्चिन्तोऽस्मीति जानीहि। यथा तव मयि विश्वासो वर्तते तथैव ममापि विश्वबन्धौ भगवति वर्तते परमो विश्वासः। न पितुः पुत्रस्य भयं भवति। ईश्वरः सर्वेषां जीवानां पिताऽस्ति। स कर्तुमकर्तुमन्यथाकर्तुं समर्थः। स यत् करोति तदेव भवति शुभाय। तस्येच्छया सर्वमिदं विभाति। तस्य कृपया निर्भयोऽस्मि, न मे वर्तते कुतोऽपि भयम्।'

एवं ब्रुवाणस्य पत्युः मुखं विलोकयन्त्याः तस्या मनसि प्रकाशोऽभवत्, विनष्टश्च तत्क्षणादेव झञ्झावातोऽपि गगनतलात्। अत आह आचार्यो महाप्रभुः श्रीवल्लभः —

ऐहिके पारलोके च सर्वथा शरणं हरिः।
दुःखहानौ तथा पापे भये कामार्थपूरणे॥

## मूढः कलहायते

आसीत् देवगुप्तायां नगर्यां सुधाकरो नाम विप्रः । ग्रामेषु पौरोहित्यं तस्य जीविका आसीत् । स बहूनि शास्त्राणि अपठत् । स गृहे समागतान् द्विजबालकान् व्याकरणं ज्योतिषमायुर्वेदमन्यानि च शास्त्राणि अपाठयत् ।

एकदा आषाढस्य पौर्णमास्यां स कस्यचिद् यजमानस्य गृहे भगवतः सत्यनारायणस्य कथां कथयितुं ग्रामान्तरं गन्तुम् ऐच्छत् । तस्य मित्रं दिवाकरमिश्रोऽपि तेन सहागच्छत् । सोऽप्यनेकशास्त्रेषु विद्वान् आसीत् । मार्गे संस्कृतं भाषमाणौ तौ विविधेषु विषयेषु वाग्विनोदानकुर्वाताम् ।

सुधाकरो मध्याह्ने श्रेष्ठिनो गृहे ग्रहशान्तिपूर्विकां भगवतः श्रीसत्यनारायणस्य कथामवाचयत् । कथान्ते द्वौ अपि तौ विद्वांसौ विप्रौ भोजनं कृत्वा किञ्चिद् विश्रम्य लब्धदक्षिणौ पूजोपादानमादाय स्वग्रामं न्यवर्तेताम् । मार्गे गर्जन्तो मेघाः पृथुलैः बिन्दुभिः वर्षितुं समारभन्त । शरणार्थिनौ तौ लघुभिः पदैः पुरः पतन्तीं नदीं तीर्त्वा तीरे स्थितं कस्यचिज् जटिनो मठमविशताम् । जलदाः धारासारं वर्षन्तो रिक्ता अभवन् । ततो मन्दं मन्दं वर्षतो मेघान् वीक्ष्य दिवाकरः सुधाकरमवादीत्—'मित्र ! परोपकाराय जीवनं ददतां मेघानां स्तुतौ पठ कमपि श्लोकम् ।' सोऽवर्णयत्—

> आश्वास्य पर्वतकुलं तपनोपतप्तं,
> दुर्दावबह्निविधुराणि च काननानि ।
> नानानदीनदशतानि च पूरयित्वा,
> रिक्तोऽसि यज्जलद ! सैव तवोत्तमा श्रीः ॥

इति श्रुत्वा दिवाकरः प्रीतोऽजायत। तदा सुधाकरस्तं प्रार्थयत्— 'मित्र! त्वमपि तटस्थान् द्रुमान् पातयन्तीं पुरो वहन्तीं नदीमिमां वर्णय।' सोऽपि च—

छायां प्रकुर्वन्ति नमन्ति पुष्पैः
फलानि यच्छन्ति तटद्रुमा ये।
उन्मूल्य तानेव नदी प्रयाति
तरङ्गिण्याः क्व प्रतिपन्नमस्ति॥

इत्यपाठीत्। तयोरित्थं साहित्यगोष्ठीं कुर्वतोः संस्कृताक्षराणामर्थं न ज्ञात्वा तत्रत्यो मठाधिपो जटिलो गङ्गादासोऽचिन्तयत्— 'नूनमिमौ ब्राह्मणौ मां मूर्खं मत्वा संस्कृतेन वचसा गालीः ददानौ स्याताम्' इति।

ततः स तौ अवादीत्— 'अरे! पण्डितंमन्यौ युवां संस्कृते मां गालीः ददानौ न लज्जेथे किम्? अहं राज्ञे निवेदयिष्यामि युवाम्। आगच्छतं मया समं न्यायमन्दिरम्।' इत्युक्त्वा स तौ बाहुभ्यां कर्षन् न्यायालयाभिमुखोऽभवत्। विप्रौ लज्जमानौ अभवताम्। जटिलः स ताभ्यां सह तारस्वरेण बहून् विजल्पानकरोत्।

तदा केवलं संस्कृतं भाषमाणाभ्यां ताभ्यां विप्राभ्यां कलहं कुर्वाणं तं जटिलं लोका न्यवारयन्।

इत्थं च मूढः कलहं करोति
असंस्कृतः संस्कृतपण्डितेन।
सङ्गीतगीतं शुपया प्रयान्तं
भषन्ति मन्दाः ननु ग्रामसिंहाः॥

# सर्वं वर्ज्यमतिमात्रम्

पुरा सहस्रपादो नाम ऋषिकुमार आसीत् । स विद्याविनयव्यवहारसम्पन्नोऽभवत् । तस्मिन् एको दुर्गुण आसीत् । सोऽतिपरिहासप्रियोऽभवत् । स समये समये परिहासपेशलैः कौशलैः सुहृदः प्रसादयति स्म । परिहासव्यसनी स कदाचिद् असमयेऽपि— 'अतिपरिहासः कलहाय कल्पते' इति न्यायेन तान् परिदुनोति स्म च ।

अन्यो मुनिकुमारः खगमः तस्य मित्रमभवत् । स सदैव सत्यवचनः सदाचारसम्पन्नः परित्यक्तसर्वसौख्यः परमः श्रद्धालुः देवद्विजगोसेवापरायणः तपस्तत्परश्चासीत् । सर्वगुणैः सम्पन्नोऽपि खगमः भीरुरभवत् । सर्पस्य तु नाम्नैव स बिभेति स्म ।

एकस्मिन् दिने मुनिकुमारः सहस्रपादः लीलया कालतृणानि चित्वा सर्पमकरोत् । तमादाय स जोषं खगमस्य पृष्ठदेशमुपागच्छत् । खगमोऽग्निहोत्रं कुर्वाणः, पृष्ठदेशे स्थितः सहस्रपादः किं कर्तुमैच्छद्, इति नाजानात् । ध्यानावस्थितः स तस्य छायामपि नापश्यत् । सहस्रपादः तं तृणसर्पं खगमस्य स्कन्धयोः न्यदधात् । सहसा स भयेनोद्विज्य भूमौ अपतत्, प्राप्नोच्च सुगाढां मूर्च्छाम् ।

ततः कतिपयैरेव क्षणैः मूर्च्छायां गतायां खगमः तं कृत्रिमं सर्पं परिज्ञाय भयममुञ्चत् । स रुष्टोऽभवत् । क्रुधा तस्य नेत्रे रक्ते अभवताम् । स सहस्रपादमशपत्— 'रे मूढ ! यतस्त्वं मां विषहीनेन सर्पेणाऽभाययथाः, ततस्त्वं विषहीनस्य सर्पस्य योनौ जायेथाः' इति ।

तस्येमं भयङ्करं शापं श्रुत्वा सहस्रपादोऽत्रसत् । स तस्य पादयोः पतित्वा साञ्जलिः प्रार्थयत्— 'हे मुने ! क्षमस्व ममापराधम्, पाहि मां शापात् सर्पस्य योनेः । मम मित्रमसि त्वम्' इति ।

इत्थं च तस्य प्रार्थनया खगमः दयार्द्रभावोऽजायत । स पुनः प्रावोचत्— 'अस्तु, मित्र ! अलमिदानीं त्रासेन । गतं न शोचन्ति सन्तः । तव कृतमन्यथा न भविष्यति । नापि च मम वचनं विफलं भवितुमर्हति । अवश्यमेव त्वं सर्पयोनौ जनिं लप्स्यसे । अथाप्यस्ति तत्रोपायः—

'भविष्यति नृपतेः प्रमतेः रुरुः नाम पुत्रः । यदा च स सर्पयोनौ सरन्तं त्वां द्रक्ष्यति, तदा त्वं शापाद् अस्माद् मोक्ष्यसे' इति ।

अथ सहस्रपादो जलव्यालानां सर्पाणां जातौ जन्म लेभे विचचार च जाङ्गलेषु जलाशयेषु सह सजातीयैः ।

प्रमतेः पुत्रस्य रुरोः पत्नी सर्पदंशान् ममार । रुरुश्च सर्पजातौ संजातक्रोधः गृहीतदृढदण्डः सर्पान् हन्तुं पृथिव्यां

परिचक्राम । यत्र यत्र स सर्पान् ददर्श, तत्र तत्रैव स तान् जघान । एकदा स डुण्डुभयोनौ वर्तमानं सहस्रपादं तं मार्गे पतितं लेभे । रुरुः तं मारयितुं दण्डमुत्थापयाञ्चकार । भीतः सहस्रपादश्च प्राणत्राणाय तं प्रार्थयामास, रुरोध च तमिदमुपदिशन्— 'राजन् ! विषविहीनानां निरपराधानां जलव्यालानामस्माकं मारणे ते पापानि भवेयुः । यश्च सर्पः तव पत्नीमदशत्, न स वैरभावेन क्रोधेन वा तथाऽकरोत् । स तु कालप्रेरितः एव तथा कर्तुं प्राभवत् । संसारेऽस्मिन् सर्वेऽपि प्राणिनः कालस्य प्रेरणया म्रियन्ते । रोगाः सर्पाः विषं विद्युत् जलमग्निश्च मृत्योः निमित्तानि सन्ति । प्राणिभ्योऽभयदानं भवादृशां भूपतीनां परमो धर्मः, इति मह्यमभयदानं दत्त्वा भवता धर्म उपार्जनीयः ।

तदा च रुरोः धर्मोपदेशं कृत्वा मुनिकुमारः सहस्रपादः सर्पयोनेः मुक्तोऽभवत् ।

इत्थं चेहानुचितपरिहासस्य कुफलं भुज्यते जनैः इति न कदापि अतिपरिहासः, अनुचितः परिहासो वा करणीयः सुबुद्धिभिः । युज्यतेऽत्र सुभाषितमिदं भणितुम्—

परिहासो रमणीयः समये सखिभिः सदा ।<br>
सोऽप्यतिमात्रमपथ्यं स्वादुमिष्टान्नवन्नृणाम् ॥

# विश्वासो नैव कर्त्तव्यः

कश्चिद् भिक्षुः धनपतेर्धर्मदत्तस्य गृहं गत्वा— 'भवति ! भिक्षां देहि' इत्युच्चैरभाषीत्। श्रेष्ठी चाञ्जलौ धान्यमादाय तस्मै दातुं द्वारदेशं समागच्छत्। भिक्षुस्तामन्नस्य मुष्टिं न स्वीचकार। श्रेष्ठी च—'अरे'! अन्नं नादाय किं मानुषं ग्रहीष्यति' इत्यवादीत्।

भिक्षुरपि विचित्र एवासीत्। स क्रोधं कृत्वा—तर्हि मानुषमेव गृहीत्वा गमिष्यामि इति प्रत्यवादीत्। स तत्रैव श्रेष्ठिनो द्वारदेशमुपविश्य मालां जपितुं लग्नः। स अन्नं जलं निद्रामपि च विहाय दिवारात्रमेकेनैवासनेनातिष्ठत्। भीतो धनपतिः तस्मै विपुलं धनं दातुं सज्जोऽभवत्। किन्तु भिक्षुको हठं नामुञ्चत्। स तु मरिष्यामि मानुषं वा ग्रहीष्यामि इत्येव पुनः पुनरवादीत्।

श्रेष्ठी राजद्वारमुपेत्य राजमन्त्रिभिः सह विषयं विचारयामास। ते तु 'म्रियतां नाम स मूर्खो यतिः, किं तव करिष्यति, न भेतव्यम्' इत्यवदन्।

ततः श्रेष्ठी गृहमागत्य न मे राजपुरुषेषु वर्तते दृढो विश्वासः। इदानीं तेऽनुकूलं वदन्ति, मृते तस्मिन् भिक्षुके तेऽन्यथा वदेयुः, अहं किं करिष्यामि तेषाम्? ततः पुनरपि स राजमन्त्रिणं गत्वा— 'भिक्षुकः स पञ्चतां प्राप्तः' इत्यवोचत्।

ततः मन्त्री साश्चर्यं तमवादीत्—अरे ! रे ! अनिष्टमिदं संवृत्तम्, तव देहल्यां मृतः स भिक्षुकः, अतः एव तस्य हत्यायां तव भागो भवेत्। राजा त्वां दण्डयिष्यति। काण्डस्यास्य राजान्तिके निवेदनं मम कर्त्तव्यमापतितम्। श्रेष्ठिन् ! क्षन्तव्योऽस्मि, राजपुरुषोऽस्मि इत्यहमस्मिन् विषये भवतः साहाय्यं कर्त्तुं नास्मि स्वाधीनः।

इत्थं च श्रेष्ठी राजमन्त्रिणा सह सम्मन्त्र्य पुनरपि गृहमगच्छत्। क्षणं विचार्य स स्वपत्नीं भिक्षुकस्याग्रे कृत्वा प्रोवाच—'यदि तव मानुषेणैव प्रयोजनम्, तर्हि इमां मम पत्नीं गृहाण' इति श्रुत्वा स भिक्षुकः उत्थाय बाहू प्रसार्य शान्त अवादीत्—हे श्रेष्ठिन् ! अहं तु केवलं मम वचनं पूरयितुं हठमकरवम्। न मे मानुषेण प्रयोजनम्, नापि च बहुना धनेन।

राजपुरुषा अपि सपरिकराः श्रेष्ठिनो द्वारदेशमवापुः। ते तं भिक्षुकं सकुशलं भयान्तं वीक्ष्य अकृतार्थाः एव न्यवर्तन्त। श्रेष्ठी तु सस्मितः पद्यमिदं मन्त्रिणेऽपाठीत्—

यतीनां शस्त्रपाणीनां नखिनां शृङ्गिणां तथा।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च॥

# सतां सङ्गः

आसीद् राजगृहनाम्नि नगरे रौहिणेयो नाम चौरः। तस्य पिताऽपि चौर्यवृत्तिरेवाभवत्। वृद्धः सः पुत्रमुपादिशत्—'हे पुत्र! यदि त्वं स्वस्य व्यवसाये साफल्यं कामयेथाः, तर्हि न जातु साधूनां सज्जनानां विदुषां हरिभक्तानां वा सङ्गतिं कुर्याः। न कदापि याहि देवमन्दिरम्। नापि कुरु देवानां कथां कीर्तनं वा। न ब्राह्मणानामुपदेशान् आचर, नापि कुरु वैष्णवानां समागमम्। दुर्भाग्ययोगाद् यदि क्वापि देवान् पूजयतां, विष्णुं भजतां, धर्मोपदेशं कुर्वतां च विदुषां समाप्रवेशः समापतेत्, तर्हि त्वया कर्णौ पिधाय तत्र स्थातव्यम्, न खलु श्रोतव्यास्तेषां शास्त्रोपदेशाः। एवमुपदिश्य तस्य पिता उपारमत्।

सदैव रौहिणेयः चौर्यं करोति। कदाचिद् राजपुरुषैः गृहीतः कारागृहमपि प्रयाति। न स स्वस्य धर्मं परित्यजति। एकदा सः चौर्यं कर्तुकामः गृहात् प्रातिष्ठत्। स मार्गे बहूनां जनानां समुदायमपश्यत्। समीपं गतः स तत्र तीर्थंकरं महावीरं स्वामिनमपश्यत्। चकितो रौहिणेयः तत्र कर्णौ पिधाय अतिष्ठत्। दैवयोगात् तदैव तस्य पादे कण्टको लग्नः। स पीडाकरं कण्टकं निःसारयितुं विवशोऽभवत्। यावत् स एकेन करेण तत् कण्टकम् निरसारयत्, तावदेव—'देवा अमरा निर्जराश्च भवन्ति, तेषां छाया भूमौ न पतति नापि च ते चरणाभ्याम् स्पृशन्ति भूमिम्'

इत्येवं व्याख्यानं कुर्वतो मुनेरुपदेशः तस्य कर्णयोः अपतत्। चौरः स सत्वरं कर्णौ पिधाय तस्मात् स्थानात् पलायत।

वर्षाणि व्यतीतानि। स नित्यं चौर्यमकरोत्। एकदा स राजपुरुषैः चौर्ये कर्मणि निगृहीतः।

निगृहीतमपि तं न कश्चिद् 'अयमेव रौहिणेयः' इति परिचेतुं समर्थः आसीत्। बहुविधैस्त्रासितोऽपि स स्वपरिचयं नाददात्। उपायान्तरं न लब्ध्वा राजपुरुषास्तं तीक्ष्णां सुराम-पाययन्। तया मूर्छितं तं राजभृत्याः कस्मिंश्चित् परमरमणीये उपवने मुक्त्वा स्वस्वगृहाणि अगच्छन्।

अन्यस्मिन् प्रभाते यदा स स्वस्थोऽभवत्, तदा आत्मानं परमे रमणीये उपवने बहुमूल्ये रत्नजातभूषिते आसने च उपविष्टमपश्यत्। तत्र विचित्राः पादपा आसन्। तेषु मनोज्ञानि सुगन्धीनि पुष्पाणि अद्भुतानि फलानि च आसन्। तत्र विविधैः वस्त्रैरलंकारैश्च भूषिताः तरुण्यो गायन्त्यो वादयन्त्यो नृत्यन्त्यश्चासन्। तास्तं प्रणम्य सविनयमवदन्—'अहो! भाग्यो-दयो भवतः। इदानीं स्वर्गलोकमागतो भवान्। पुण्यवन्तः खलु समायान्ति स्वर्गलोकम्। कृपया स्वपरिचयं ददातु भवान्। मर्त्ये लोके केन नाम्ना किं नाम नगरं समलङ्करोति स्म भवान्? न देवलोकं सम्प्राप्ताः कदापि असत्यं वदन्ति, ये चात्र समायाता अपि सत्यं न भाषन्ते, स्वर्गात् च्युता भवन्ति।'

'अहो ! सुरलोकं प्राप्तोऽहम् । एता दिव्या अप्सरसः ! इदं रमणीयं नन्दनं वनम् !' इत्याश्चर्यपरम्परया चकितो रौहिणेयः यावत् स्वपरिचयं दातुमुद्युक्तोऽभवत्, तावन्मुनेः वचनानि तस्य स्मरणपथमागच्छन् । तदा स उच्चैरवादीत्—अहो ! न मया सह कापट्येन वर्तितव्यं युष्माभिः, नाहं स्वर्गं समायातः, न च यूयमप्सरसः । देवतानां चरणाः भूमिं न स्पृशन्ति, नापि च तासां छायाः पृथिव्यां पतन्ति, इति मया आप्तमुखात् श्रुतम् । गच्छन्तु स्वगृहं देव्यः । अहमेव रौहिणेयोऽस्मि, इति ते राजपुरुषाः युष्माभिः प्रोक्तव्याः । इत्युक्त्वा स मनसा महावीरस्य शरणमगच्छत् ।

एतस्मिन्नन्तरे राजपुरुषाः आगत्य तं राज्ञः समक्षमनयन् । तदा रौहिणेयः सर्वं स्ववृत्तान्तं नृपालाय न्यवेदयत् । राजाऽपि क्षमते स्म सर्वानपि तस्यापराधान् ।

रौहिणेयोऽपि संजातविरागो न निवर्तते स्म स्वगृहम् । सोऽपि सर्वं विहाय तीर्थंकराद् दीक्षां गृहीत्वा मुनिरभवत् । स मोक्षमार्गमन्वसरत् । क्षणमपि कृतः सतां सङ्गः कल्याणाय कल्पते इति कवयो वदन्ति—

> महाजनस्य सम्पर्कः कस्य नोन्नतिकारकः ।
> पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम् ॥

# प्रत्युत्पन्नमतिर्वैश्यः

आसीत् पुरा पाटलीपुत्रे लक्ष्मीप्रसादो नाम धनिको वणिक्। साधुस्वभावः स धर्मपरायणोऽभवत्। स व्यापारेण विपुलं धनमार्जत्। लोकेषु प्रतिष्ठितः स यशः पुण्यं चापि लेभे। कालक्रमेण तस्य जरा समागच्छत्। स व्यवहारेषु शिथिलोत्साहोऽजायत। तस्य गृहे पत्नी, परिणीतौ युवानौ पुत्रौ, तयोः भार्ये चासन्।

तस्य वणिजः अलसौ तौ पुत्रौ सर्वदा मिथः कलहायमानौ आस्ताम्। वृद्धः स एकदाऽचिन्तयत्—अहो! ममेयं महती संपद् धनान्धितधियामेतेषां ममात्मजानां महतीं विपदमानेष्यति। नैते धनोन्मादिनः इदानीं बधिरा अन्धाः पङ्गवश्च इव शृण्वन्ति पश्यन्ति चरन्ति चोचितम्। यथोच्यते—

> बधिरयति कर्णविवरं वाचं मूकयति नयनमन्धयति।
> विकृतयति गात्रयष्टिं सम्पद्रोगोऽयमद्भुतो राजन्॥

अन्यच्च धनवतां वर्तते भयम्—

> राजतः सलिलादग्नेश्चौरतः स्वजनादपि।
> भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव॥

मन्ये च ममान्ते युवानौ अविवेकिनौ इमौ मे सुतौ धनस्यास्य विभाजने एव कलहमुत्पाद्य अवश्यमेव विनाशमेष्यतः। अतो मया मरणात् प्रागेव धनस्यास्य सुविभागो विधेय इति।

इत्थं चिन्तयन् स स्वसम्पदो विभागं कर्तुं मनो दधे। स क्षेत्राणि गावः भवनानि भूषणानि वसनानि सर्वाणि चान्यानि वस्तूनि समानभागेन विभज्य पुत्राभ्यामददात्। एकमङ्गुलीयक-मवशिष्टम्। तस्यैव विभागे तयोः तत्पुत्रयोः कलहः सम-जायत। ज्येष्ठः तदादातुं हठमकरोत्। कनिष्ठोऽपि तद् ग्रहीतु-मनुरोधमकरोत्। तदा स वणिक् पुत्रौ सम्बोध्य अवादीत्—हे सुधियौ! नाल्पस्य हेतोः कुरुतं मिथः कलहम्। एकः अङ्गु-लीयकं गृह्णीयात्, अन्यश्च तस्य प्रभूतं मूल्यम्। अनेन प्रकारेण समानभागभाजौ भूत्वा सुखिनौ भवतं युवाम्। शृणुतं नीतिवचनम्—

लोभं लाभं यशो वापि मानं वापि पदं महत्।
परित्यज्य सुधीः स्वैरं विवादविषयं त्यजेत्॥

परन्तु पुत्रौ तौ पितुः निर्णयेन सन्तुष्टौ नाभवताम्। तदा सः 'अन्यस्मिन दिनेऽस्य निर्णयं दास्यामि' इत्युक्त्वा विवादविषयात् आत्मानं मोचयित्वा शयनगृहमगच्छत्।

किं मृषा वृत्तानां गणनया' इति। इत्थं पितुर्वचनं श्रुत्वा ज्येष्ठः पुत्रोऽङ्गुलीयकं गृहीत्वा पितरं प्रणम्य गृहमविशत्। ततः स श्रेष्ठी द्वितीयं पुत्रमानाय्य अवादीत्—पश्य पुत्र! इदमङ्गुलीयकं मया तव कृते समानीतम्। तव भ्राता मया कथमपि प्रबोध्य संतोषितः। इदानीमिदं गुप्तं रक्ष, येन ते ज्येष्ठो भ्राता न पश्येदिदम्। एवं कथयति जनके सोऽप्यङ्गुलीयकं तद् गृहीत्वा भवनमगच्छत्।

अनेन प्रकारेण पुत्रयोः संविभागं विधाय निर्विण्णः बुद्धिमतां श्रेष्ठः स वणिक् सुखेन जीवितशेषं निरवहत्। तस्य पुत्रौ च सुतरां भ्रातृभावेन मिथः साहाय्यं कुर्वन्तौ सुखिनौ अभवताम्। इत्थं च बुद्धिवैभवेन विपदि महात्मानः सज्जनाः स्वयं सुखिनो भूत्वा स्वबन्धून् अन्यानपि च सुखभाजः कुर्वन्ति। इदमत्रोच्यते—

> विपदि धैर्यमथाभ्युदये क्षमा
>
> सदसि वाक्पटुता युधि विक्रमः।
>
> यशसि चाभिरुचिर्व्यसनं श्रुतौ
>
> प्रकृतिसिद्धमिदं हि महात्मनाम्॥

---

# भ्रातरौ

शंखो लिखितश्च भ्रातरौ आस्ताम्। शंखो ज्येष्ठः लिखितश्च कनिष्ठ आसीत्। तौ जात्या ब्राह्मणौ आस्ताम्। तौ मुनी अभवताम्। तौ तपस्विनौ आस्ताम्। तौ च पृथक् पृथक् आश्रमं कृत्वा अवसताम्। एकदा लिखितः शंखं द्रष्टुं तस्य आश्रमपदमुपागच्छत्। दैवात् शंख उपस्थितः नासीत्। स केनापि प्रयोजनेन नगरं गतोऽभवत्। भोजनस्य वेला आसीत्। लिखितं क्षुधा बाधते स्म। आश्रमवृक्षेषु पक्वानि फलानि आसन्। मम ज्येष्ठस्य भ्रातुरेवेदं फलोद्यानम् नान्यदीयमिति विचार्य लिखितः वृक्षाणामधस्तात् पतितानि फलानि चित्वा अखादीत्।

अस्मिन्नेवान्तरे शंख आश्रमपदं समुपागच्छत्। कनिष्ठो ज्येष्ठस्य भ्रातुः पादयोः प्राणमत्। स आशिषो दत्वा तस्य कुशलमपृच्छत्। ततः स स्नात्वा पूजाविधिं विधाय भोजनस्य सज्जां कर्तुं लग्नः। श्यामाकस्य भक्तं गोदुग्धं फलानि चासन् भोक्तुम्। 'आगच्छ तात! भुञ्ज्वहे, महती ते वेला सञ्जाता बुभुक्षितस्य' इति भ्रातुः वचनमाकर्ण्य—'अत्रा-गतेन मया आश्रमस्य फलानि भुक्तानि' इति नातिबाधते मां क्षुधा इति वदन् लिखितः पादौ हस्तौ च प्रक्षाल्य भ्रात्रा सह भोक्तुमुपाविशत्। कृतं सुखेन भोजनं द्वाभ्याम्। ततश्च स्वाध्यायचत्वरे शिष्यैः सह उपविशन्तौ तौ धर्मचर्चा-मकुर्वाताम्।

शंखः—किं तात! भोजनात् पूर्वमद्य त्वया फलानि भुक्तानि ?

लिखितः—भुक्तानि मधुराणि पक्वानि फलानि ।

शंखः—ननु कुतो लब्धानि तानि फलानि त्वया ?

लिखितः—तानि सर्वाणि अस्मादेव आश्रमोद्यानात् लब्धानि ।

शंखः—तर्हि चौरस्य कर्म कृतं त्वया, यत् मामनापृच्छ्यैव मदीयस्य आश्रमस्य फलानि त्वया खादितानि ।

लिखितः—(लज्जमानोऽधः पश्यन्) अहो! अपराद्धं मया।

शंखः—तर्हि, कृतस्यापराधस्य दण्डमर्हसि त्वम् ।

लिखितः—अवश्यमर्हामि । किं दण्डं स्यात् ?

शंखः—इदमहं न जानामि। देशस्य राजानं गत्वा 'चौरोऽस्मि, दण्डं मे देहि' इत्यापृच्छस्व त्वम् ।

ततो लिखितः ज्येष्ठस्य भ्रातुः आदेशेन सत्वरो देशस्य राजानं सुद्युम्नं समुपेत्य—'हे राजन्! मया अनापृच्छ्यैव भ्रातुः आश्रमस्य फलानि भुक्तानि, इति प्रमादात् मम चौर्यं कर्म आपतितम्, तच्चौर्यस्य दण्डं मयि विधातुमर्हति देवः' इति न्यवेदयत् ।

राजा—'हे मुनिकुमार! दण्डाधाने यदि राजानमेव प्रमाणं मन्यते भवान्, तर्हि क्षमाप्रदानेऽपि स एव प्रमाणम्' इति मन्ये। तदहं भवन्तं क्षमे। गृह्णातु ममातिथ्यम्, सेवां चान्यामाज्ञापयतु भवान् ।

इत्थं च राज्ञो वचनं निशम्य मुनिर्नातुष्यत् ।

स तु—'अहं दण्डमर्हामि, अहं दण्डमर्हामि' इति पुनः पुनराग्रहमकरोत् । अन्ततो गत्वा स राजा मुनौ दण्डमाधातुमागृहीतः वाचयति स्म चेत्थं दण्डधाराम्—

शुद्धाचारो मुनिर्मोहाद् येनाङ्गेनापराध्यति ।
छेदनं तस्य शस्त्रेण स लब्ध्वा शुद्धिमर्हति ॥

ततो राजा मुनेस्तस्य हस्तौ छेदयाञ्चकार । छिन्नहस्तो लिखितः पुनरागत्य भ्रातुः पादयोः पतित्वा क्षमामयाचत ।

अथ प्रीतिमान् शंखो भ्रातरमवादीत्—'तात ! प्रसन्नोऽस्मि त्वय्यहम् । त्वमसि परमो धर्मज्ञः । तव हस्तच्छेदनमिदं धर्मोल्लंघनस्य समुचितं दण्डम् । इयमस्ति नातिदूरे आश्रमान् नदी । अस्यां स्नात्वा कुरु देवानां पितॄणां च तर्पणम् । नातःपरम् अधर्मे मतिं कर्तुमर्हसि त्वमिति मन्ये । ततो लिखितः सचैलः नदीमवातरत् । स्नात्वा च यावत् स तटमुपैति स्म, तावदेव तस्य भुजाभ्यां कमलकोमलौ करौ अजायेताम् । तदा विस्मितोऽतिप्रसन्नः स मुनियुवा देवर्षिपितृतर्पणं विधाय पुनर्भ्रातरमुपेत्य तस्य पादयोः प्राणमत्, अदर्शयच्च तं स्वस्य नवागतौ कमलकोमलौ हस्तौ ।

शंखश्च पुनः कनिष्ठस्य भ्रातुः विस्मयमपाकर्तुकामः 'मया तपसः प्रभावात् तवेमौ हस्तौ पुनः समुत्पादितौ, तपसा सर्वं भवितुमर्हति, इति जानीहि तात ! निश्चितम् ।'

लिखितः—यद्येवमस्ति, तर्हि पूर्वमेव किं न मे शुद्धिः सम्पादिता तत्र भवता ?

शंखः—यतो दण्डाधाने नास्ति ममाधिकारः। तत्र तु राजैवाधिकरोति। अनेन ममोपदिष्टेन विधिना राजापि शुद्धिमर्हति, पितरः तृप्ताः, देवाः प्रीताः, त्वमपि च दोषमुक्तो धर्मस्य गतिं लब्धवान्। इति कल्याणपरम्परेयं मुनीनामस्माकम्।

यस्यां नद्यां स्नानात् लिखितस्य बाहुभ्यां हस्तौ समुद्भूतौ, सा नदीदानीमपि अवाच्याम् बाहुदा इति नाम्ना प्रसिद्धास्ति।

अस्तेयं खलु दशलक्षणस्य धर्मस्य चतुर्थं लक्षणम्। यः कश्चिदिह धर्मस्यान्यतरमपि लक्षणमंशेनापि समाचरति तं धर्मो रक्षतीति दृष्टान्तोऽयम्। धर्मस्य विविधा विधयो वर्त्तन्ते इति ऋषयो वदन्ति—

श्रुतिर्विभिन्ना स्मृतयोऽपि भिन्नाः
नैको मुनिर्यस्य वचः प्रमाणम्।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः॥

गत १४ वर्षों से प्रकाशित अपने क्षेत्र का अद्वितीय
संस्कृतमासिकपत्र

संस्कृत को सरल, सुलभ, सर्वग्राह्य बनाने के लिए

# बालसंस्कृतम्

—आपके भारतीयत्व का पुष्ट प्रमाण होगा।

—प्रारम्भिक संस्कृत छात्रों की कठिनाइयों को दूर करेगा।

—आपको हठात् संस्कृतानुरागी बनाएगा।

—सभी भारतीय भाषाओं को जोड़ने वाली कड़ी होगा।

—भारतीय संस्कृति और सभ्यता को सामने रखेगा

—आपके व्यवहार ज्ञान की वृद्धि में ... होगा।

—आपको संस्कृत की सरलता और ... का परिचय देगा।

आज ही ग्राहक बनिए! वार्षिकशुल्क पांच रुपए!

प्राप्ति स्थानम्—

बालसंस्कृतं कार्यालयः

आगरा रोड, घाटकोपर, बम्बई-७७

दिल्ली शाखा—

८०, कोटला रोड, नई दिल्ली-१

लिखितः—यद्येवमस्ति, तर्हि पूर्वमेव किं न मे शुद्धिः सम्पादिता तत्र भवता ?

शंखः—यतो दण्डाधाने नास्ति ममाधिकारः । तत्र तु राजैवाधिकरोति । अनेन ममोपदिष्टेन विधिना राजापि शुद्धिमर्हति, पितरः तृप्ताः, देवाः प्रीताः, त्वमपि च दोषमुक्तो धर्मस्य गतिं लब्धवान् । इति कल्याणपरम्परेयं मुनीनामस्माकम् ।

यस्यां नद्यां स्नानात् लिखितस्य बाहुभ्यां हस्तौ समुद्भूतौ, सा नदीदानीमपि अवाच्याम् बाहुदा इति नाम्ना प्रसिद्धास्ति ।

अस्तेयं खलु दशलक्षणस्य धर्मस्य चतुर्थं लक्षणम् । यः कश्चिदिह धर्मस्यान्यतरमपि लक्षणमंशेनापि समाचरति तं धर्मो रक्षतीति दृष्टान्तोऽयम् । धर्मस्य विविधा विषयो वर्तन्ते इति ऋषयो वदन्ति—

श्रुतिर्विभिन्ना स्मृतयोऽपि भिन्नाः
नैको मुनिर्यस्य वचः प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥

गत १४ वर्षों से प्रकाशित अपने क्षेत्र का अद्वितीय

संस्कृतमासिकपत्र

संस्कृत को सरल, सुलभ, सर्वग्राह्य बनाने के लिए

# बालसंस्कृतम्

—आपके भारतीयत्व का पुष्ट प्रमाण होगा।

—प्रारम्भिक संस्कृत छात्रों की कठिनाइयों को दूर करेगा।

—आपको हठात् संस्कृतानुरागी बनाएगा।

—सभी भारतीय भाषाओं को जोड़ने वाली कड़ी होगा।

—भारतीय संस्कृति और सभ्यता को सामने रखेगा।

—आपके व्यवहार ज्ञान की वृद्धि में होगा।

—आपको संस्कृत की सरलता और का परिचय देगा।

आज ही ग्राहक बनिए ! वार्षिकशुल्क पांच रुपए !

---

प्राप्ति स्थानम्—

बालसंस्कृतं कार्यालयः

आगरा रोड, घाटकोपर, बम्बई-७७

दिल्ली शाखा—

८०, कोटला रोड, नई दिल्ली-१

# अस्माकं प्रकाशनानि

| | | एकस्य प्रतेः मूल्यम् रु०न.पै. |
|---|---|---|
| संस्कृतव्याहारः | भागाः १—५ | ०.७५ |
| सप्त विभक्तयः | | ०.७५ |
| पञ्च सन्धयः | | ०.७५ |
| संस्कृतप्रवेशिका | भागाः १—३ | ०.७५ |
| बालनीतिकथाः | भागाः १—८ | ०.६३ |
| संस्कृतसोपानम् | भागाः १—३ | १.२५ |
| प्रहेलिकाशतकम् | | ०.५० |
| समासाः | | ०.५० |
| संभाषा | भागाः १—५ | ०.६२ |
| संभाषा English | भागाः १—५ | ०.६२ |
| लौकिकन्यायरत्नमञ्जूषा | | २.२५ |
| संस्कृतप्रबन्धचन्द्रिका | भागाः १—३ | १.२५ |
| सुन्दरं संस्कृतम् | भागाः १—३ | ०.७५ |
| भारतीयाः महापुरुषाः | | १.२५ |
| कुमारसंभवम् | ( संक्षिप्तगद्यम् ) | ०.७५ |
| रघुवंशम् | ( संक्षिप्तगद्यम् ) | ०.७५ |
| बालरामायणम् | | ०.७५ |
| लघुनिबन्धावली | | १.०० |
| संस्कृतवर्णमाला | | १.०० |
| कृदन्ताः | | ०.५० |
| शालेयसुभाषितानि | | ०.६२ |

प्राप्तिस्थानम्—

बालसंस्कृतकार्यालयः

आग्रा रोड, घाटकोपर, बम्बई-७७

दिल्ली शाखा—

८०, कोटला रोड, नई दिल्ली-१

# बालनीतिकथाः

रचयिता

वैद्य. राम[illegible]शास्त्री

सम्पादकः

नन्दनन्दनसनाढ्यः एम० ए०

बालसंस्कृतम् प्रकाशनम्

आगरा रोड, घाटकोपर, बम्बई-७७

# कथानां क्रमः

१. सर्वं पश्यति सुन्दरम् ... १
२. पापस्य प्रायश्चित्तम् ... ३
३. सिंहशूकरयोर्बलम् ... ५
४. सर्वनाशाय मूर्खता ... ६
५. हितमूलानि मित्राणि ... ८
६. क्षमात्संजायते सुखम् ... ११
७. भारती-कथा ... १४
८. अष्टौ चैत्रस्य किङ्कराः ... १६
९. बुद्धिमान् वानरः ... १९
१०. धर्मपालो गोपालः ... २४
११. अहिंसा परमो धर्मः ... ३०

पुस्तकस्यास्य सर्वेऽधिकाराः स्वाधीनाः सन्ति

द्वितीयं मुद्रणम् ] [ १ मई खिष्टाब्दाः १९६३

प्रकाशकः—

वैद्यः-रामस्वरूपशास्त्री

बालसंस्कृतं कार्यालयः, आगरा रोड, घाटकोपर, बम्बई-७७

मुद्रकः—

सार्वदेशिकप्रेस, दरियागंज, दिल्ली-७

# बालनीतिकथाः

## षष्ठो भागः

## सर्वं पश्यति सुन्दरम्

पुरा मालवाधिपतेः भोजराजस्य सेवापरः शुक्लमुण्डो नाम नापित आसीत्। एकदा स रात्रौ पादसंवाहनसमये स्वामिप्रसादाय नगरे जायमानानां सुन्दराणां कुमाराणां वृत्तान्तं समुपास्थापयत्, न्यवेदयच्च महीपतिम् 'यत्राकृतिः तत्र गुणा वसन्ति' इति लोकश्रुतेः हेतुम्। राजापि तदा प्रसन्नायां मुद्रायां वर्तमानः—'दर्शय समानीय सर्वसुन्दरं कंचित् पारितोषिकोचितं सुकुमारं कुमारम्' इति तमादिशत्।

अन्येद्युः प्रातः स नापितो नृपप्रदत्तेन रक्षापुरुषेण सह राजादेशाद् बहूनां पौराणां द्वाराणि समुपेत्य तेषां तेषां सुन्दराणामसुन्दराणां वा कुमाराणां गुणान् वर्णयितुं प्रार्थयति स्म। सर्वेऽपि ते स्वेषां पुत्राणां गुणान् सौन्दर्यं चावर्णयन्। न कोऽपि सतामपि स्वेषां दोषाणां चर्चामकरोत्। ततः स नापितः सर्वस्यां राजधान्यां नगरे नगरे ग्रामे ग्रामे च

भ्रान्त्वा गुणवत्तमं च कुमारं मृगयते स्म। न स क्वापि राज्ञा वाञ्छितं सर्वसौन्दर्यसम्पन्नं सर्वोत्तमगुणं च कुमारं लभते स्म।

ततः सायं गृहं निवृत्तः स नापितः मनस्यचिन्तयत्—अहो! सुन्दरमन्याः सन्ति जनाः। न कोऽपि विसुन्दरमात्मानं पश्यति। सर्वे जनाः स्वात्मजानां कुमाराणां गुणानेव वर्णयन्ति। न कोऽपि स्वस्य दोषान् परीक्षते। सर्वः कान्तमात्मानं पश्यति।

ततः पादेन खोडम्, चक्षुषा काणम्, मर्कटाकृतिं च नितान्तं निर्गुणमपि स आत्मनः पुत्रमाहूय अङ्के न्यवेशयत्। स प्रेम्णा प्रफुल्लवदनोऽजायत। सोऽचिन्तयत्—'अहो! सुन्दरतमोऽयं मम कुमारः। न कोप्यन्योऽस्य पूर्णचन्द्राननस्य षोडशीमपि कलामर्हति। किन्नाहं गुणवत्तमं स्वात्मजमेव राज्ञः पुरस्ताद् उपस्थाप्य महतः पारितोषिकस्य भाजनं भवामि।' इति विचार्य स वस्त्राभूषणमालिकाभिः आत्मजं भूषयित्वा राजसभामनयत्।

राजा तु प्रथमम्, अशुभदर्शनं तं नापितस्य पुत्रं दृष्ट्वा क्रुद्धोऽभवत्। ततश्च क्षणं विचार्य समवेक्ष्य च भूतानां प्रकृतिं प्रकृतिस्थो भूत्वा 'सर्वोऽपीह सुन्दरतमं स्वं पश्यति' इति वाचा, पारितोषिकधनेन च नापितं संतोष्येमं श्लोकमपठत्—

दोषं पश्यति सर्वोऽपि परकीयेषु वस्तुषु।
पामरोऽपि जनः स्वीयं सर्वं पश्यति सुन्दरम्॥

# पापस्य प्रायश्चित्तम्

एकदाऽहं गृहे चौर्यमकरवम्। न तन्मम पापं कर्म कोऽपि अपश्यत्। समृद्धे गृहे विपुलायाः धनराशेः स्वल्पं मुषितं कः शंकेत। पितृभ्यां लालिते एकाकिनि आत्मजे कथं किमर्थं वा तौ किमपि शंकेताम्, यद्यहं स्वयमेव न स्वीकुर्याम्, न कथमपि ममापराधं कोऽपि जानीयात्।

अविचार्य कृतं तच्चौर्यं कर्म ममासह्यं संवृत्तम्। सुविक्लवमभवन्मे मनः। अस्य मलिनस्य कर्मणः किं प्रायश्चित्तम्, कथं वा भवेत्, इत्यहं भूयो भूयोऽचिन्तयम्। कथं नाम पितुः पुरस्ताद् ईदृग् अकर्म उपस्थापयामि, इत्यपि न मे धैर्यसाध्यमासीत्। बाल्यादारभ्य नाद्यावधि पञ्चदशवार्षिकोऽहं कदापि पित्रा पुष्पेणापि ताडितोऽभवम्, इति मे न किंचिदपि पितुः सकाशात् दण्डभयमभवत्। तथाप्यहं पुत्रवत्सलो देवमूर्त्तिः मे तातः मया कृतं चौर्यं कर्म श्रुत्वा दुःखी भविष्यति इति चिन्तातुरोऽभवम्।

सुचिरं विचार्य—'पत्रं लिखित्वा स्वापराधं पित्रे निवेदयामि' इति मया निश्चितम्। 'पितुरग्रे स्वीयं पापकर्म

स्वीकृत्य, पुत्रवत्सलात् तस्मात् क्षमापनं च लब्ध्वाऽपराधमुक्तो भवामि' इत्यहमैच्छम् ।

तदानीं रुग्णाः तातपादाः पर्यङ्के शयाना अभवन् । अहं सर्वं मे तच्चौर्यवृत्तान्तं पत्रे लिखित्वा तेषां हस्ते समार्पयम्, अतिष्ठं च पार्श्वे एव स्थितायामासन्द्याम् । कम्पमानमासीत् पापेन मम हृदयम् ।

पिता मम पत्रं पठितुं शयनाद् उत्थाय पर्यङ्केऽतिष्ठत् । स सम्पूर्णमपठन् मे पत्रम् । दुर्बलाभ्यां तस्य कपोलाभ्यामश्रूणि अगलन् । स नेत्रे निमील्य क्षणमशोचीत् । ततश्च पत्रं छित्त्वा दूरमक्षिपत्, आशिश्रियत् च पुनः शय्याम् । अहं रुदन्नासम् । तातोऽपि रुदन्नासीत् । चतुर्भ्योऽपि पितापुत्रयोः नेत्रेभ्यो गलितानि पवित्राणि अश्रुजलानि सर्वं मम किल्बिषं क्षालयामासुः ।

तदानीन्तनी सा घटनाऽधुनापि मम हृदये जागर्ति । सैष मे प्रथमो धार्मिकः पाठः आसीत् ।

—महात्मा गान्धी

# सिंहशूकरयोर्बलम्

कश्चित् ग्रामशूकरः पल्वलात् पल्वलं पर्यटन् तीरेषु विट्चरोऽभवत्। काश्चित् तिस्रः शुन्यः तम् अपश्यन्। तं वीक्ष्य पश्चाल्लग्नाः ता एकपदे एव भषितुं प्रारभन्त। तासां पश्चाद् धावमाना दश कुक्कुरशावका अपि मातृः अन्वकुर्वन्। तेऽपि भषन्तः तस्य शूकरस्य पश्चाद् अन्वधावन्। एवं तस्य कुक्कुरकुटुम्बस्य भषणं श्रुत्वा अन्ये सप्त सारमेयाः समागच्छन्। तेऽपि भषन्तः तस्य शूकरस्य पश्चाल्लग्नाः। ततो भीतःस शूकरः रथ्याम् अविशत्। तत्रापि तेन कुक्कुरयूथेन अनुसृतः स कस्याश्चित् विशालमुखाया मलिनजलप्रणाल्या मुखमविशत्। तत्र स चिरं स्थित्वा मुखान्तरेण ग्रामाद् बहिः अगच्छत्। यावत् स भूमिं जिघ्रन् तस्मिन् वन्ये प्रदेशे पर्यटति, तावत् मृगमांसं खादन्तं कश्चित् सिंहम् अपश्यत्। तं दृष्ट्वा स शूकरः परिकरं बद्ध्वाऽगर्जत्, अवादीच्च—हे मांसाशन! दिष्ट्या त्वमद्य मम दृष्टिगोचरः संजातः। अद्य त्वां विना करिष्यामि जगदिदम्। तिष्ठ तिष्ठ रे वनेचर! मया खलु—

दश व्याघ्रा जिताः पूर्वं सप्त सिंहास्त्रयो गजाः।
पश्यन्तु देवताः सर्वाः अद्य युद्धं त्वया मम॥

इतीत्थं तस्य विकत्थनं श्रुत्वा क्रुद्धोऽपि मृगपतिस्तं शूकरः इति कृत्वा सस्मितमवादीत्—हे अमेध्याशन!

गच्छ शूकर! भद्रं ते वद सिंहो मया हतः।
पण्डिता एव जानन्ति सिंहशूकरयोर्बलम्॥

# सर्वनाशाय मूर्खता

कश्चित् निरक्षरः विरागी आसीत्। स सदैव साधुवेषं विधाय मधुरया वाचा जनान् अवञ्चयत्। तस्य द्वौ शिष्यौ अपि तादृशौ एव अशिक्षितौ मूढौ वञ्चकौ च आस्ताम्। उक्तं च—

यथा पिता तथा पुत्रः यथा बीजं तथाङ्कुरः।
यथा गुरुस्तथा शिष्यः यथा राजा तथा प्रजा॥

तयोः एकः सदैव जटाधारी अतः जटिलः अन्यश्च सुतरां कृतमुण्डनः इति मुण्डितः इति नामभ्यां तौ प्रसिद्धौ अभवताम्। जटिलः नितरां गुरोः शुश्रूषापरः पादसंवाहनादिषु च निरतः अतिष्ठत्। मुण्डितश्च नित्यं दृढां यष्टिकां गृहीत्वा गुरोः मन्दिरस्य द्वारि प्राहरिककर्मतत्परः अभवत्। एकदा निशायाः प्रथमे प्रहरे एव गुरुः शय्याम् समाश्रयत्। तद्दिने सोऽस्वस्थः आसीत्। तस्य शिरसि पीडा आसीत्। जटिलः अपि समीपस्थ एव तम् असेवत। मन्दं मन्दं पवनः अवहत्। गुरोः शिरःपीडा च न्यूना अजायत। स निद्रायाः परम् अगच्छत्। निद्राणस्य तस्य नासिकातः खर्रखर्रेति शब्दः प्रावर्तत। तत् श्रुत्वा जटिलः गुरोः नासिकां वर्जयन्

अवदत्—'आः दासीपुत्रि ! रण्डे ! किं करोषि अवटिके ! किन्तु मयि जाग्रति गुरोः निद्राभङ्गं कर्तुमिच्छसि ? तूष्णीं भव, अन्यथा अहं त्वाम् ताडयिष्यामि। एवं बहुवारं भर्त्सिता अपि नासिका यदा स्वव्यापारान् न व्यरमत्, तदा क्रुद्धः स जटिलः समीपस्थं दण्डं समादाय, 'गृहाण चण्डि !' इति वदन् नासिकाम् अहन्। गुरुः अपि आहतः, हा दैव ! इति प्रोच्चैः चीत्कारं कृत्वा शयनाद् उदतिष्ठत्, अधावत् च भयेन पुरः पलायमानस्य जटिलस्य पश्चात्। जटिलस्तु द्वारम् उल्लंघ्य दूरम् अगच्छत्। स तत्र रात्रौ अन्धकूपे पतितः मृतश्च। गुरुः अपि धावन् द्वारदेशं समागच्छत्। सोऽपि तत्र स्थितेन मुण्डितेन यावल्लगुडैः ताडितः तावत् पञ्चत्वम् अगच्छत्। ततः प्रातः मुण्डितः गुरुं गुरुभ्रातरमपि च मृतं वीक्ष्य शोकसन्तापाकुलः प्राणान् अमुञ्चत्। एवं च तेषां मूर्खाणां सर्वनाशः समजायत। मूर्खाः स्वयं विनश्यन्तीति निदर्शनमिदम्।

छात्राः ! न कदापि युष्माभिः मूर्खसंपर्कः रक्षणीयः।

उक्तं च—

> स्वयं मूर्खो जनो यत्र यस्य मूर्खो निजो जनः।
> यस्य मित्रं च मूर्खः स्यात् तत्कुलं वै विनश्यति॥

# हितमूलानि मित्राणि

एकस्मिन् अरण्ये काको बिडालः शशकश्चेति त्रयो मित्राणि अवसन्। लतानां निकुञ्जस्य सन्निधौ घनच्छायस्य शिरीषवृक्षस्य प्रशाखासु काको नीडमकरोत्। बिडालोऽपि तस्मिन्नेव शाखिनि रात्रौ स्वपिति स्म। तरोः तले शशकस्य बिलमासीत्। त्रयोऽपि मित्राणि सदैव सहचारिणोऽभवन्। नित्यं ते मिथो हितानि चिन्तयन्तो वृत्त्यर्थं वनाद् वनं पर्यटन्।

एकदा स्वभावचञ्चलः शशकः वेगेन धावमानः खातेऽपतत्। तस्यैकोऽग्रपादो भग्नः। काको बिडालश्च तं कथंचित् निवासमानयताम्।

अन्यस्मिन् वने कश्चित् किखिः (Fox) वैद्यवृत्तिः आसीत्। काकबिडालौ च तं सत्वरमाहूय शशकस्य चिकित्साम् अकारयताम्। त्रिभिरेव सप्ताहैः शशकस्य अस्थिसन्धानमजायत। तथापि स वैद्यराजः तं शशं गृहे एव स्थातुं श्रमं च वर्जयितुमकथयत्।

द्वितीये दिने आहारार्थिनौ तौ काकबिडालौ निवासात् प्रस्थानसमये तं शशं बहिः निसर्तुं न्यषेधताम्। 'अत्रेदानीं

वने कश्चिद् दुष्टो वृको वसति, न त्वया आवयोः अनुपस्थितौ बिलाद् बहिः गन्तव्यम्, दुर्बलमेकाकिनं त्वां प्राप्य स हनिष्यति' इति च तौ तं सुदूरं प्राबोधयताम् ।

अथ नातिदूरं गतयोः तयोः काकबिडालयोः शशकः बिलात् बहिः आगत्य वनशोभां द्रष्टुं निकुञ्जस्य द्वारमतिष्ठत् ।

अस्मिन् अन्तरे अवसरप्रेक्षी वृकः तत्रागत्य शशं हन्तुमाक्रमत् । तं वीक्ष्य शशः भयात् चीत्कारमकरोत् । तस्य क्रन्दनं श्रुत्वा निवृत्य धावमानौ काकबिडालौ वृकात् शशकमरक्षताम् ।

पुनर्मध्याह्ने शशकं सम्यग् अवबोध्य काकमार्जारौ तौ जीविकार्थिनौ वनं प्रातिष्ठेताम् । निर्गतयोः तयोः वृकः पुनरागत्य बिलस्य नातिदूरे अवस्थाय मधुरेण स्वरेण गातुं प्रारब्धवान् । 'किमिति मधुरं गानम्' इति कौतूहली शशकः बिलद्वारमुपागच्छत् । तं गृहीत्वा स सत्वराभ्यां पादाभ्यां पलायितुं यत्नमकरोत् । पुनरपि च सावधानौ वायसबिडालौ शशकस्य चीत्कारमाकर्ण्य सत्वरमागतौ शशकस्य रक्षामकुर्वाताम् ।

अन्येद्युः आहारार्थं वनं प्रयान्तौ तौ ध्वांक्षमार्जारौ पुनरपि मित्रं शशं बहिर्गन्तुं निषेधयन्तौ सम्यगुपादिशताम् ।

वनं गतयोस्तयोः स वृकः बहुरूपी भूत्वा पुनः पुनः बिलस्य द्वारमुपेत्य बहुशः छलवचनैः शशकमाकारयत्। मूर्खः शशकः पुनरपि मित्रयोः उपदेशान् विस्मृत्य वृकस्य वाग्जालेऽपतत्। आक्रन्दमानं तं शशं वृकः मुखेन आदाय स्वगृहाभिमुखोऽभ्यपतत्। 'गृहमुपेत्य कुटुम्बेन सह सुखेन आस्थाय शशमिमं खादिष्यामि' इति चिन्तयन् धावमानः स वृकः युगपदेव काकबिडालाभ्याम् आक्रान्तः। काकः प्रोड्डीनं बद्ध्वा, चञ्च्वा वृकस्य नेत्रे आस्फोट्य तमन्धमकरोत्, बिडालश्च तस्य गलं गृहीत्वा मर्माणि अभिनत्।

इत्थं च तौ वृकं मारयित्वा जीवन्तं शशं मृत्युमुखाद् आच्छिद्य अरक्षताम्, आनयतां च स्वनिवासस्थानम्। शशः कतिपयैरेव दिवसैः पुनः स्वस्थो भूत्वा प्रकृतिमगच्छत्। ततस्त्रयोऽपि ते परस्परं भावयन्तः सुखेन वनेऽवसन्। इत्थं च मित्राणि दुर्बलान् सखीन् रक्षन्तः सुखेन जीवन्ति।

अत्रेदमुच्यते—

शक्तेः मित्राणि मूलानि हेतूनि रक्षणस्य च।<br>
सुखानां च निमित्तानि दुःखानां च चिकित्सितम्॥

# श्रमात्संजायते सुखम्

आसीत् पुरा काश्मीरेषु कश्चिन् नृपतिः। स धार्मिकः दयालुः वीरश्चाभवत्। स नयेन प्रजा अपालयत्। एकदा स राजा रुग्णोऽजायत। सुदूरदूराद् आहूताः वैद्यप्रवराः तमुपाचरन्। सर्वेऽसफला निराशाश्चासन्। दिने दिने नृपालस्य व्याधिः वृद्धिं प्राप्नोत्।

नृपस्य नगराद् योजने अरण्यमभवत्। तत्र च कृताश्रमः कश्चित्तापसोऽवसत्। स तपसो बलेन जनानां कामान् अपूरयत्। लोकाः तस्य भक्ता अभवन्। श्रद्धालवो राजसेवका राजानं तत्रानयन्। ते महात्मानं प्रणम्य रोगाक्रान्तं नृपालं तमदर्शयन्। महात्मा च राज्ञः रोगं परीक्ष्य चिकित्सितं न्यरूपयत्—

पटं पुराणं सुखिनो वसित्वा
जनस्य कस्यापि सकृन्नृपालः।
शिवानि नामानि जपन्नुपेयात्
हरिं तदा रोगविमुक्तिमीयात्॥

इदं तु तपोधनस्य वचनमाकर्ण्य त्वरिता राजसेवकाः सुखिनं जनं मृगयितुं चतसृषु दिक्षु अधावन्। ते कस्यचिद् धनिकस्य आलयमुपेत्य—'ननु वर्तते सर्वथा सुखी भवान्?' इत्यपृच्छन्। स तु 'मम गृहाणि सन्ति, रजतं स्वर्णं

रत्नानि च सन्ति, सम्पत्तयः सन्ति, भृत्याश्च सन्ति। तथापि मे पुत्रो नास्तीति सर्वदा चिन्तातुरो भवामि। नाहं साकल्ये-नात्मानं सुखिनं वक्तुं प्रभवामि।'

ततस्तेऽन्यतमस्य प्रथितयशसो धनिकस्य सौधद्वारमु-पागच्छन्, अपृच्छन् च गृहस्वामिनमुपेत्य तस्य सौख्यम्। सोऽपि च दक्षिणेन हस्तेन शिरो गृहीत्वाऽधोमुखः प्रावो-चत्—'मम धनानि, भवनानि, क्षेत्राणि, उपवनानि रजतम्, स्वर्णम्, रत्नानि, दाराः, पुत्राः बान्धवाश्च सन्ति। परन्तु स्वयमहं स्वस्थो नास्मि। न मे समये निद्रा, नापि च भवति भोक्तुमिच्छा। किं करोमि, सदैव दुःखमनुभवामि। क्व वर्तते सुखमिति न जानाम्यहम्।'

ततस्तेऽपरं महाधनिनं समेत्य तस्य सुखानि अपृच्छन्। सोऽपि च—वर्तन्ते मे सर्वाः अपीहापेक्षिताः समृद्धयः तथापि मम पुत्राः मिथः कलहायन्ते, भार्या चाप्रियवादिनी वर्तते। नाहमात्मानं सुखिनं कथयामि।

पुनश्च ते कंचन विद्वांसमुपेत्य तस्य सुखविषयिकीं पृच्छामकुर्वन्। सोऽपि च — मम विद्याः विज्ञानं कलाश्च सन्ति। तथापि धनं नास्तीति सर्वदा चिन्तापरोऽस्मि। कुटुम्बभरणमपि मे भारः इवाभाति। किं किं कथयामि मम दुःखानाम्?

अग्रतो गत्वा ते कौशेयवस्त्रधारिणं कंचन जटिनमपश्यन्। एष सुखी भवेद्, इति मन्वानास्ते तमपृच्छन् सुखस्य समा-चारम्। सोऽपि च यौवने मृतभार्यस्य मे सम्पत्तयो नष्टाः, पुत्राश्च

मृताः । ततः सञ्जात विरागोऽहं धृततापसनेपथ्यो गृहमत्यजम्, पर्यटामि चेदानीं भिक्षार्थी गृहाद् गृहम् । भोजनस्यापि मम काठिन्यं वर्तते । नास्ति सुखस्य लवमपि संसारेऽस्मिन् इति मेऽनुभवः ।

अस्मिन्नन्तरे सूर्यास्तमनवेलाऽभवत् निराशास्ते राजपरिचराः—'कथं स्वामिनो रोगमोक्षः स्यात् । न मिलति कोऽपि सुखी जनः । क्व च तस्य परिधानम् । मूलं नास्ति कुतः शाखाः । असम्पन्नाः खलु कारणेन विना कार्यसिद्धयः ।'

इत्थं च मनसि चिन्तयन्तः राजप्रासादं निवर्तमानास्ते कंचन श्रमिकमपश्यन् । सर्वं दिनं परिश्रमेण कार्यं कृत्वा स गृहाभिमुखो गच्छन्, आलपंश्च पञ्चमं स्वरं प्रसन्नमुखमुद्रायां वर्तमानोऽभवत् । वर्तते कच्चित् तव सुखम् ? इति ते राजभृत्यास्तमपृच्छन् । सोऽपि च—'अवश्यमहं सुखवानस्मि । सर्वं दिनमहं सुखेन कार्यं करोमि । नाहं कार्यचौरः, न वित्तचौरः, नापि चालसः । कर्मशूरोऽहम् सर्वदा सत्यं वदामि । प्रातः सायं नियमेनेश्वरं स्मरामि । न मे कस्मादपि भयम् । नास्ति मे चिन्ता । अनुकूलास्ति मे भार्या, पुत्राश्च वशे सन्ति । मित्राणि प्रियाणि । बान्धवाः सहिताः सन्ति । अस्ति मे सुखम् ।'

इत्याकर्ण्य 'मिलितमिष्टम्' इति कथयन्तः ते राजदूताः तं श्रमजीविनमादाय राज्ञः पुरस्ताद् उपास्थापयन् । राजा च तेन सह चिरं व्याहृत्य अन्ततो गत्वा 'श्रमे सुखमस्ति' इति आत्मनि निरचिनोत् । ततः प्रभृति स नृपालः श्रमेण जीवनं यापयतीति मातामही मां कथयति स्म ।

श्रमात्संजायते विद्या श्रमात् संजायते बलम् ।
श्रमात् संजायते वित्तं श्रमात् संजायते सुखम् ॥

# भारती-कथा

पुरा भरतस्य वंशे धृतराष्ट्रः पाण्डुश्च युवराजौ आस्ताम्। धृतराष्ट्रः ज्येष्ठः अन्धश्च, पाण्डुः कनिष्ठः रुग्णश्च अभवत्। गान्धारी धृतराष्ट्रस्य भार्या आसीत्, पाण्डोश्च कुन्ती माद्री च भार्ये अभवताम्। कुन्तीं बान्धवाः पृथाम् अब्रुवन्। धृतराष्ट्रस्य दुर्योधनः दुःशासनः दुःशल्यः अन्ये च शतं पुत्राः आसन्। पाण्डोश्च पञ्च पुत्राः। तेषु युधिष्ठिरः भीमः अर्जुनश्च पृथायाः पुत्राः अभवन्। नकुलः सहदेवश्च माद्रीसुतौ अभवताम्। जनाः पाण्डोः सुतान् पाण्डवान्, धृतराष्ट्रपुत्रान् च कौरवान् आहुः। कौरवेषु पाण्डवेषु अपि च युधिष्ठिरः गुणैः श्रेष्ठः ज्येष्ठश्च आसीत्, इति उपरते पाण्डौ धृतराष्ट्रः तं युवराजं विधाय भीष्मपितामहस्य विदुरस्याऽपि च मन्त्रित्वे राज्यम् अशासत्। कालेन कुमाराः सर्वासु विद्यासु कुशलाः अभवन्। विशेषेण युधिष्ठिरः राजनीतौ, भीमः मल्लयुद्धेषु, अर्जुनः धनुर्विद्यायाम्, नकुलः अश्वसंचालनेषु, सहदेवः ज्योतिषे, दुर्योधनः विविधयुद्धकलासु, दुःशासनश्च कूटनीतौ निपुणः आसीत्।

अन्धे पितरि राजकार्यं प्रायः दुर्योधन-दुःशासनौ एव अकुर्याताम्। कौरवाः पाण्डवेभ्यः भयम्, पदे पदे पराजयं च लब्ध्वा तेभ्यः द्वेषं कर्तुम् आरभन्त। ते द्यूते पाण्डवान् जित्वा तेषां सर्वस्वम् अपाहरन्। सभार्यास्ते द्वादश वर्षाणि वनेऽवसन्, वत्सरम् अज्ञातवासे च। वनात् प्रत्यागत्य कुलस्य कल्याणमिच्छुः युधिष्ठिरः दुर्योधनेन सन्धिं कर्तुम्

ऐच्छत्। स श्रीकृष्णं दूतं व्यसृजत्। वासुदेवः पाण्डवानां कृते दुर्योधनाद् अर्धं राज्यम् अयाचत, अन्ते च 'पञ्चभिरेव ग्रामैः अपि प्रदत्तैः सन्तुष्टाः भविष्यन्ति ते' इति कौरवसभायां व्याहरत् वासुदेवः। दुर्योधनस्तु 'सूच्यग्रं नैव दास्यामि विना युद्धेन केशव!' इत्यघोषयत्।

प्रारब्धः संग्रामः। वीराः रणे प्राणान् व्यमुञ्चन्। तत्र गुरून् शिष्याः, पितॄन् पुत्राः, भ्रातॄन् भ्रातरः, पौत्रान् पितामहाः, पितामहान् पौत्राः, मातुलाः भागिनेयान्, भागिनेयाः मातुलान्, मित्राणि मित्राणि च अघ्नन्। अन्ततः भीमः दुःशासनं हत्वा तस्य रुधिरोक्षिताभ्यां पाणिभ्यां द्रौपद्याः केशपाशान् अबध्नात्।

ऋषयः धर्मराजं युधिष्ठिरं राज्येऽभ्यषिञ्चन्। पाण्डवाः देशान् विजित्य हस्तिनापुरम् ( इदानीं दिल्लीम् ) राजधानीम् अकुर्वन्। धर्मराजः राजसूयं नाम यज्ञम् अकरोत्। तं नृपालाः अनर्घाणि रत्नानि उपाहरन्। चिरं समृद्धं राज्यं भुक्त्वा पाण्डवाः हिमालयीये मार्गेण स्वर्गम् अवाप्नुवन्।

छात्राः! व्यासस्य महाभारतं विशालं विशिष्टं च काव्यम्। तत्र विविधाः विचित्राः च कथाः सन्ति। संस्कृतं ज्ञात्वा ताः पठिष्यथ यूयम्। इदानीं वयं तं मुनिवरं व्यासं नमामः।

सर्वज्ञाय नमस्तस्मै व्यासाय प्रभविष्णवे।
योऽकरोदद्भुतं काव्यं सारं विश्वस्य भारतम्॥

---

# अष्टौ चैत्रस्य किङ्कराः

एकस्मिन् नगरे रामदत्तो देवदत्तश्च द्वौ प्रातिवेशिकौ स्तः। तयोः धनिकस्य रामदत्तस्य मैत्रः, निर्धनस्य देवदत्तस्य चैत्रश्च पुत्रौ स्तः। द्वौ अपि तौ नियमेन पाठशालां यातः, पठतश्च समानायामेव कक्षायाम्। धनाढ्यो मैत्रः अश्वशकटेन मोटर-कारेण वा पाठशालामायाति, चैत्रश्च पद्भ्याम्। मैत्रः शोभने प्रासादे निवसति। तस्य माता भगिन्यः भ्रातरश्च सन्ति। तस्य गृहे भृत्याः सन्ति। चैत्रस्य माता नास्ति, न भगिनी, नापि च भ्राता। स देवदत्तस्य एक एव पुत्रः, स एव ज्येष्ठः, स एव कनिष्ठश्च। सर्वं गृहकार्यम्, समयेन भोजनपाकमपि स एव करोति। तथापि सदैव यथासमयं पाठशालामुपतिष्ठति, सज्जीकरोति च सम्यक्तया पठितान् स्वपाठविषयान्।

एकदा शालायाः मध्यावकाशवेलायां चैत्रो मैत्रश्च मिलितौ। वार्ताप्रसङ्गेन मैत्रश्चैत्रं कथयति—मित्र! त्वं तु नितरां दरिद्रोऽसि, इत्यहं भृशं दूये। मां पश्य, अहं विशाले शोभने सज्जिते च भवने निवसामि। बहुमूल्यानि सुन्दराणि च वस्त्राणि वसामि। मम भृत्याः सन्ति। तानहं यत्किमपि आज्ञापयामि, त्वरितं ते कुर्वन्ति। मम गृहेऽहं न किमपि करोमि। त्वं तु कुट्टनं पेषणं पचनं वस्त्रधावनं चापि स्वयमेव करोषि। तव तु न कोऽपि किङ्करः। दुःखेन जीवसि त्वम्।

चैत्रः—नहि, त्वं न जानासि, ममापि अष्टौ किंकराः सन्ति। ते सदैव ममादेशं प्रतीक्षन्ते।

मैत्रः—अहो चैत्र! 'सत्यवादी असि' इति वृथा त्वां लोकाः स्तुवन्ति। आचार्योऽपि भ्रमेण त्वां सत्यवादिनं जानाति। न त्वं सर्वदा सत्यं वदसि। अहं जानामि, अन्ये च जानन्ति, न ते कोऽपि किंकरः। इदानीं त्वं सर्वथा असत्यं कथयसि।

चैत्रः—नहि सखे! नाहं मिथ्या वदामि। सर्वे जनाः सत्यं प्रशंसन्ते न तु माम्। आचार्योऽपि सत्येन प्रसीदति। अहं तावत्सत्यं कथयामि, अनुमोदे च सत्यमेव सुतराम्।

मैत्रः—तर्हि कथय, क्व सन्ति ते भृत्याः? पामरोऽपि जानाति, त्वमधनः इति। एकमपि भृत्यं त्वं वेतनेन रक्षितुं न प्रभवसि। कुतस्ते अष्टौ किंकराः प्रतीक्षन्ते? कथं नु प्रत्यक्षमसत्यं ते वचः प्रत्येतव्यम्? नातिदूरे स्थितः अध्यापकः अपि अनयोः भाषणं शृणोति। सोऽपि चैत्रस्य वचः परिहासं मन्यमानः समीपमागत्य ब्रूते। रे चैत्र! 'ममाष्टौ किंकराः सन्ति' इति प्रत्यक्षमलीकं भाषसे? किं न जानासि, 'परिहासेऽपि मिथ्या न वदेदिति'। अथवा लब्धः कुतोऽपि निधिः तव पित्रा, येन त्वमिदानीं धनाढ्योऽसि संजातः।

चैत्रः—सस्मितं ब्रूते। क्षमताम् आचार्यपादाः। नाहं कदापि मिथ्या कथयामि सत्यं मेऽष्टौ किंकराः सन्ति। मैत्रस्य भृत्यास्तु कदाचित्तं परिहरेयुः। कार्यवशाद् अन्यत्रापि गच्छेयुः। जातु आलस्येन कर्म न कुर्युः। कदाचित्सत्याग्रहविधिम् आश्रयेयुः।

मम भृत्यास्तु सुतरां स्वामिभक्ताः सन्ति। न ते कदापि आज्ञोल्लंघनं स्वप्नेऽपि जानन्ति। न ते क्षणमपि मामेकाकिनं मुञ्चन्ति। नाहं च तेभ्यः काणवराटकमपि ददामि वेतनम्, तथापि ते मां नित्यं परिचरन्ति।

आचार्यः—आश्चर्यकरः ते वचनविन्यासः। ब्रूहि तावत्, किंनामधेयास्ते अष्टौ किंकराः, कस्य तव गृहस्य कोणे निवसन्ति?

चैत्रः—श्रूयतां तावत्, अष्टानामपि मम भृत्यानां नामानि। द्वौ मम हस्तौ, द्वौ मम पादौ, द्वे नेत्रे, द्वे श्रोत्रे चेति अष्टौ मम किंकराः सविनयं ममादेशमनुतिष्ठन्ति। यदाहं कुत्रापि गन्तुमिच्छामि, तदा मम पादौ 'मां तत्र नयतम्' इत्याज्ञापयामि, तौ च सत्वरमेव मां तत्र नयतः। यदाहं किमपि ग्रहीतुमिच्छामि, तदा मम हस्तौ आदिशामि। यदा किमपि द्रष्टुमिच्छामि, तदा मम नेत्रे प्रेरयामि। यदा किंचित् श्रोतुमिच्छामि, तदा मम श्रोत्रेऽनुयुनज्मि। तत्क्षणमेते तत्तत्कार्याणि कुर्वन्ति। मम किंकरास्तु मैत्रस्य भृत्येभ्योऽपि श्रेष्ठाः इति मन्ये। ननु मन्यते भवानपि?

इति चैत्रस्य चमत्कृतं वचः श्रुत्वा आचार्यः प्रसन्नो भवति, प्रयच्छति च उपायने 'संस्कृतव्याहार'—नामकं पुस्तकं ससाधुवादम्, कथयति च सस्मितः—

भृत्याः कुर्वन्ति कार्याणि वेतनं च गृह्णन्ति ते।
अष्टौ चैत्रस्य भृत्यास्तु कार्यं कुर्वन्त्यवेतनम्॥

---

# बुद्धिमान् वानरः

अस्ति कस्मिंश्चित् समुद्रोपकण्ठे महान् जम्बूपादपः। तत्र च रक्तमुखो नाम वानरः प्रतिवसति स्म। तत्र च तस्य तरोः अधः कदाचित् करालमुखो नाम मकरः समुद्रसलिलात् निष्क्रम्य सुकोमलवालुकासनाथे तीरोपान्ते न्यविशत्। ततश्च रक्तमुखेन स प्रोक्तः, भोः भवान् समभ्यागतोऽतिथिः, तद् भक्षयतु मया दत्तानि अमृततुल्यानि जम्बूफलानि। उक्तं च—

प्रियो वा यदि वा द्वेष्यो मूर्खो वा यदि पण्डितः।
वैश्वदेवान्तमापन्नः सोऽतिथिः स्वर्गसंक्रमः॥
न पृच्छेत् शरणं गोत्रं न च विद्यां कुलं न च।
अतिथिं वैश्वदेवान्ते श्राद्धे च मनुरब्रवीत्॥
अपूजितोऽतिथिर्यस्य गृहाद् याति विनिश्वसन्।
गच्छन्ति विमुखास्तस्य पितृभिः सह देवताः॥

एवम् उक्त्वा स तस्मै जम्बूफलानि ददौ। सोऽपि तानि भक्षयित्वा तेन सह चिरं गोष्ठीसुखम् अनुभूय भूयोऽपि स्वभवनम् अगात्। एवं नित्यमेव तौ वानरमकरौ जम्बूच्छायास्थितौ विविधशास्त्रगोष्ठ्या कालं नयन्तौ सुखेन तिष्ठतः। सोऽपि मकरो भक्षितशेषाणि जम्बुफलानि गृहं गत्वा स्वपत्न्यै प्रयच्छति।

अथ अन्यतमे दिवसे तया स पृष्टः—नाथ! क्व एवंविधानि अमृतफलानि प्राप्नोषि? स आह— भद्रे! मम अस्ति परमसुहृद् रक्तमुखो नाम वानरः, स प्रीतिपूर्वम् इमानि फलानि प्रयच्छति। अथ तया अभिहितम्—यः सदैव अमृतप्रायाणि ईदृशानि फलानि भक्षयति, तस्य हृदयम् अमृतमयं भविष्यति। तद् यदि मया भार्यया ते प्रयोजनम्, ततः तस्य हृदयं मह्यं प्रयच्छ, येन तद् भक्षित्वा जरामरणरहिता त्वया सह भोगान् भुनज्मि। स आह— भद्रे! मा मा एवं वद। यतः स प्रतिपन्नोऽस्माकं भ्राता, फलदाता च, ततो व्यापादयितुं न शक्यते, तत् त्यज एनं मिथ्याग्रहम्। उक्तं च—

एकं प्रसूयते माता द्वितीयं वाक् प्रसूयते।<br>
वाग्जातमधिकं प्रोचुः सोदर्यादपि बन्धुवत्॥

एवं बहुशः प्रबोधिता अपि मकरी गृहीताग्रहा संजाता। सा प्राह— किं बहुना, यदि तस्य हृदयं न भक्षयामि, तर्हि मया प्रायोपवेशनं कृतं विद्धि। एवं तस्याः तन्निश्चयं ज्ञात्वा चिन्ताव्याकुलितहृदयः स प्रोवाच—अहो साधु इदमुच्यते—

वज्रलेपस्य मूर्खस्य नारीणां बालकस्य च।<br>
उष्ट्रकर्कटयोः ग्राहो नीलीमद्यपयोस्तथा॥

तत् किं करोमि? कथं स मे वध्यो भवति इति विचिन्त्य वानरपार्श्वम् अगमत्। वानरोऽपि चिरेण आयान्तं तं सोद्वेगम्

अवलोक्य प्रोवाच— भोः ! मित्र ! किमद्य चिरवेलायां समायातोऽसि, कस्मात् साह्लादं न आलपसि ? न वा सुभाषितानि पठसि ? स आह— मित्र ! अहं तव भ्रातृजायया निष्ठुरतरैः वाक्यैः अभिहितः— भोः कृतघ्न ! मा मे त्वं स्वमुखं दर्शय, यतः त्वं प्रतिदिनं मित्रम् उपजीवसि, न च तस्य पुनः प्रत्युपकारं गृहदर्शनमात्रेणाऽपि करोषि, तत् ते प्रायश्चित्तमपि नास्ति। उक्तं च—

ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥

तत् त्वं मम देवरं गृहीत्वा अद्य प्रत्युपकारार्थं गृहम् आनय, नो चेत् त्वया सह मे परलोके दर्शनम्। अतः अहं तया एवं प्रोक्तः तव सकाशम् आगतः। तद् अद्य तया सह त्वदर्थं कलहायतो मम इयती वेला विलग्ना, तद् आगच्छ मे गृहम्। तव भ्रातृपत्नी रचितचतुष्का प्रगुणितवस्त्रमाणिक्याद्युचिताभरणा द्वारदेशबद्धवन्दनमाला सोत्कण्ठा तिष्ठति। मर्कट आह— भोः युक्तम् अभिहितं मद्भ्रातृपत्न्या। उक्तं च—

वर्जयेत् कोकिलाकारं मित्रं प्राज्ञतरो नरः।
आत्मनः सम्मुखं नित्यं य आकर्षति लोलुपः ॥

तथा च—

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुंक्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥

परं वयं वानराः, युष्मदीयं च जलान्ते गृहम्, तत् कथं शक्यते तत्रागन्तुम्? तस्मात् तामेव मे भ्रातृपत्नीम् अत्र आनय, येन प्रणम्य तस्या आशीर्वादं गृह्णामि। स आह— भोः मित्र! अस्ति समुद्रान्तरे सुरम्ये पुलिनदेशे अस्मद्-गृहम्। तत् मम पृष्ठम् आरूढः सुखेन अकृतभयो गच्छ। सोऽपि तत् श्रुत्वा सानन्दम् आह— भद्र! यदि एवं तत् किं विलम्ब्यते? त्वर्यताम्, एषोऽहं तव पृष्ठम् आरूढः। तथाऽनुष्ठिते अगाधे जलधौ गच्छन्तं मकरम् आलोक्य भयत्रस्तमनाः वानरः प्रोवाच— भ्रातः! शनैः शनैः गम्यताम्, जलकल्लोलैः प्लाव्यते मे शरीरम्। तद् आकर्ण्य मकरः चिन्तयामास—असौ अगाधजलं प्राप्तो मे वशे संजातः, मत्पृष्ठगतः तिलमात्रमपि चलितुं न शक्नोति, तस्मात् कथयामि अस्य निजाभिप्रायम्, येन अभीष्टदेवतास्मरणं करोति। आह च— मित्र त्वं मया वधाय समानीतो भार्यावाक्येन विश्वास्य, तत् स्मर्यताम् अभीष्टदेवता। स आह— भ्रातः! किं मया तस्याः तवापि च अपकृतं येन मे वधोपायः चिन्तितः? मकर आह—भोः! तस्याः तावत् तव हृदयस्य अमृतमयफलरसास्वादनमिष्टस्य भक्षणे दोहदं सञ्जातम्, तेन एतद् अनुष्ठितम्। प्रत्युत्पन्नमतिः वानरः आह— भद्र! यदि एवम्, तत् किं त्वया मम तत्र एव न व्याहृतम्, येन स्वहृदयं जम्बूकोटरे सदा एव मया सुगुप्तं कृतं तद् भ्रातृपत्न्या अर्पयामि। त्वया अहं शून्यहृदयोऽत्र कस्माद् आनीतः? तद् आकर्ण्य मकरः सानन्दम् आह— भद्र! यदि

एवम्, तदर्थं मे हृदयम्, येन सा दुष्टा पत्नी तद् भक्षयित्वा अनशनाद् उत्तिष्ठति। अहं त्वां तमेव जम्बूपादपं प्रापयामि। एवम् उक्त्वा निवृत्य जम्बूतलम् अगात्। वानरोऽपि कथमपि जल्पितविविधदेवतोपचारपूजः तीरमासादितवान्। ततश्च दीर्घतरचंक्रमेण तमेव जम्बूपादपम् आरूढः चिन्तयामास—अहो! लब्धाः तावत् प्राणाः। अथवा साधु इदमुच्यते—

न विश्वसेदविश्वस्ते विश्वस्ते नापि विश्वसेत्।
विश्वासाद् भयमुत्पन्नं मूलान्यपि निकृन्तति॥

तन्मम एतद् अद्य पुनर्जन्मदिनमिव सञ्जातम्, इति चिन्तयमानं मकर आह—भो मित्र! अर्पय तद् हृदयम्, यत् ते भ्रातृपत्नी भक्षयित्वा अनशनाद् उत्तिष्ठति। अथ विहस्य निर्भर्त्सयन् वानरः तमाह— धिग् धिङ् मूर्ख! विश्वासघातक! किं कस्यचिद् हृदयद्वयं भवति? तदाशु गम्यतां जम्बूवृक्षस्य अधस्तात्, न भूयः त्वया अत्र आगन्तव्यम्। न जानासि रे मूढ! —

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम्।
वर्जयेत् तादृशं मित्रं विषकुम्भं पयोमुखम्॥

---

# धर्मपालो गोपालः

आसीत् पुरा काश्मीरेषु कौलेश्वरो नाम नृपतिः। स आखण्डलः सुरलोकमिव शास्ति स्म स्वं राज्यम्। स युधिष्ठिर इव धीरः, राम इव लोकाराधनतत्परश्चाभवत्। तस्मिन् शासति समीहितमवर्षन् जलदाः। सुर्वरा सस्याढ्या भूमिः विविधानि वस्तूनि धान्यानि च सूते स्म। गावो यथेच्छं गव्यानि प्रायच्छन्। राष्ट्रे चौरा नासन्। लुण्टाका नाभवन्। जनाश्चरित्रवन्तोऽभवन्। वैश्याः व्यापारिणश्च धनाढ्या आसन्। सर्वथा सुखिन्योऽभवन् प्रजाः।

तस्य सामदामदण्डभेदनीतीनां निपुणः परमेश्वरप्रसादो नाम कौलः सचिवोऽभवत्। सर्वतन्त्रविशारदः स प्रधानः सचिवः एव सर्वं राज्यधुरं वहति स्म। सुयोग्ये तस्मिन् मन्त्रिणि स राजा सर्वं राजकार्यं निधाय सुचिरं श्रीसुखानि अभुनक्। बहुतिथं कालं राजभोगान् भुञ्जन् स नरेश्वरो यौवनमत्यवा-हयत्। सचिवोऽपि बुद्धिभूषणभूषितः शोभते स्म।

काश्मीरेश्वरस्तु धृतपरमेश्वरविश्वासो धर्मेण प्रजाः समा-राधयन्, बलिकर्णदधीचिमान्धातृदशरथान् अनुकुर्वन्, अध्य-गच्छत् विपुलां कीर्तिं प्रतापं चानुपमम्।

अथैकस्यां पूर्णिमायां प्राणायामसमये मनसो विनिपातात् मन्त्री परमेश्वरः सहसा पञ्चत्वमगच्छत्। तं राजा चिरम-शोचीत्। प्रजा बहुतियं कालं सशोका अभवन्। अशक्तोऽपि

राजा प्रजायाः कल्याणकामनया राज्यकार्यभारमवहत्। ततः स प्रजासुखं राष्ट्रस्य सुसमृद्धिं चेहमानः सदैव सुयोग्यस्य मन्त्रिणो मार्गणे प्रयत्नान् अकरोत्।

त्रीणि वर्षाणि व्यतीतानि प्रतिवर्षं तस्य नवीनः सचिवः समागच्छत्। नैकोपि तेषु राज्ञः सन्तोषाय समजायत। अहोरात्रं राज्यकार्याणि कुर्वतः शोचतश्च सचिवस्याभावं नृपते-श्चिन्ता वर्धतेतराम् स्म।

रुग्णोऽजायत काश्मीरेश्वरः। रोगिशय्यायां शयानोऽपि सः, द्रष्टुमागतान् बहून् स्वजनान् योग्यस्य सचिवस्यानयनार्थं प्रार्थयत्। सेनापतिः, पुरोहितो, राजवैद्यो, धर्माधिकारी, भण्डारी, कर्मचारी, प्रतीहारी, चाराश्च तं द्रष्टुमागच्छन्। सर्वानपि तान् स कस्यचन कुशलस्य सचिवस्य समानयनार्थमादिशति स्म।

एकस्मिन् दिने स राजा स्वकीयं राजवैद्यं प्रावोचत् — किं भोः वैद्यराज ! ननु जानाति भवान् सुयोग्यस्य सचिवस्य कस्यचित् प्राप्तेः प्रकारम् ?

'जानामि महाराज ! आदेशो भवेद्यदि श्रीमतः। मया-नीतः स बुद्धिमान् पुरुषस्तत्रभवतो रुचये भवेन्नवेति वक्तुं न शक्नोमि' इति सोऽब्रवीत्।

'योग्यं कार्यकरं समानयतु भवान्' इति राजा राज-वैद्यमादिशत्।

अन्यस्मिन् प्रभाते वैद्यराजः कंचिद् गोपालं पुरस्कृत्य राजानमपश्यत्। गोपालो वृद्ध आसीत्। स मलिनं धौतम्,

जीर्णं कञ्चुकम्, अतिशीर्णं शिरोवेष्टनं च परिदधाति स्म। तस्य स्कन्धे कम्बलं हस्ते च लगुडमासीत्।

'अयं श्रीमतः साचिव्ये सुयोग्यः इति भवानेनं मन्त्रिपदे नियोजयेद्' इति वैद्यराजो नृपतये न्यवेदयत्।

इत्थं च राजवैद्ययोः भाषणं निशम्यावगतार्थः स गोपालः साञ्जलिः प्रार्थयत्— नृपराज! अहमस्मि धर्मपालो नाम ग्रामीणो गोपालः। नाहं मन्त्रिणः कार्यं कर्त्तुमलम्, न चाहं कामये मन्त्रिपदम्।

राजा च तदा—'योग्यो भवान्। मम वैद्यवरेण समानीतः। अद्य प्रभृति मम मुख्यो मन्त्री भविष्यति भवान्, वक्ष्यति राज्यभारम्, द्रक्ष्यति च यत्र तत्र प्राप्तदोषांश्च सर्वानपि विशेषान् राजप्रबन्धान्' इति तमादिशत्, पर्यधारयच्च तं प्रतीहारिणा समानाय्य नवानि राजमन्त्रियोग्यानि वस्त्राणि, अदर्शयच्च पुनः स्वयमङ्गुल्या, 'अयं पुरस्ताद् भवतो वसतये प्रासादः'; प्रक्षिपेद् इदानीमिमानि पुराणानि वासांसि, भोक्ष्यते च भवान् अद्य मया साकं विहाय सर्वं संकोचं भयं चापि, इति पुनः पुनस्तमन्वबध्नात्।

धर्मपालोऽपि राजादेशं शिरो धृत्वा मुख्यामात्यस्य पदे नियुक्तो राज्यप्रबन्धान् विधातुं प्रारभते।

सोऽयं नवोऽमात्यो धर्मपालो गोपालो यद्यपि न जानाति पठितुं लिखितुं च, तथापि स बुद्धिमान् लब्धानुभवो दृष्टा

पर्यवेक्षिता चास्ति कार्यजातानाम् । सोऽयं पुनरन्तःसारोऽकुटिलो लोकचित्तवृत्तिज्ञोऽक्रोधनो ज्ञातव्यवहारः कार्याणां साधकोऽर्थानामुत्पादने च दक्षोऽस्ति ।

इदानीं यत्र यत्र राजपुरुषाणां भृत्यानां च यान् यान् दोषान् एष पश्यति तत्र तत्रैव सुविशेषेणानुसन्दधानस्तांस्तान् संशोधयति । क्वचिद् मार्दवेन, क्वचित् साम्ना, क्वचिद् दानेन, क्वचिन्मानेन, क्वचित् प्रीत्या, क्वचिन् नीत्या, क्वचिदुदाहरणैः, क्वचिद् भीत्या, क्वचिच्च दण्डभेदाभ्यां स साधयति सर्वाणि राजकार्याणि ।

स भृत्येषु मित्राणीव, मित्रेषु बन्धूनिव, बन्धुषु आत्मानमिव व्यवहरति । निर्मापयति स प्रजाहिताय जलाशयान्, कुल्याः कारयति, बन्धान् बन्धयति, उपवनानि समारोपयति, विद्यालयान् आयोजयति, कलामन्दिराणि च समुद्घाटयति । स पण्डितान् पूजयति, कवीन् सम्मानयति, गुरूनुपचरति, कलावतः परितोषयति, शिष्टान् चाद्रियते । स साधुषु साधुः, दुर्जनेषु दुर्जनः, कुटिलेषु कुटिलः, मायाविषु मायावी, धार्मिकेषु धार्मिकश्च गण्यते जनैः । सुविचार्य करोति स कार्याणि । दण्डे चिरयति, दाने शीघ्रकारी भवति, कार्येष्वदीर्घसूत्रतामवलम्बते, सर्वाः प्रजाश्च सुखेन जीवयति ।

शासतीदानीं धर्मपालेऽन्यायेन स्वार्थान् साधयतां धूर्तानामवसरो न फलति । ते राजानमुपेत्य मन्त्रिणो दोषान्

गवेषमाणाः तमुपजपन्ति । बहुशस्ते नृपालं चाटुभिः स्तुवन्ति सूचयन्ति च तम् —

महाराज ! एष भवता मन्त्रिपदे नियुक्तो गोपालः केवलं पशुपाल एव । नैष किमपि कर्तुं जानाति । अयं लोकान् वञ्चयित्वा स्वार्थान् साधयति । ऐश्वर्यमवाप्यास्य च कामाः वर्धन्तेतराम् । अयं तत्रभवन्तं हत्वा स्वयं राजा भवितुं कामयते । अयमन्तःकक्षस्य द्वारं पिधाय भवतो मारणप्रयोगान् अनुतिष्ठति । चिरादेष श्रीमन्तं मारयितुं प्रयतते । अस्य कक्षे मारणोच्चाटनद्रव्याणि वर्तन्ते इति भवानेव समुपेत्य साम्प्रतमेव द्रष्टुं प्रभुः । सुदुर्जनादस्माद् आत्मानं रक्षतु भवान् इति सूचयामो वयम् ।

'चारैः पश्यन्ति राजानः न स्वचक्षुभिः' इति न्यायेन तेषां वचनं सत्यं मन्वानः सन्दिहानश्च मन्त्रिणि स राजा तैः सहैव सचिवस्य कक्षद्वारमुपेत्य सर्वं तदुक्तं व्याहरति मन्त्रिणम् ।

मन्त्री धर्मपालस्तु नृपतेः वचः श्रुत्वा स्मितं विधाय प्रार्थयते— महाराज ! निराधारो वर्तते सन्देहोऽमीषाम् । भवता कक्षद्वारस्योद्घाटने हठो न विधेयः ।

इति तस्य वचः श्रुत्वा नृपतेरौत्सुक्यं वृद्धिं प्राप्नोति । स मन्त्रिणं कक्षस्य द्वारमुद्घाटयितुमादिशति ।

ततो धर्मपालस्तालकमपाकृत्य कक्षद्वारमपावृतकपाटं करोति, दर्शयति च सर्वानपि तान् कक्षान्तर्गतं सर्वम् । तत्र गोपालस्य पुराणानि वस्त्राणि भित्तौ दर्पणं कोणे लगुडं च विना न किमप्यासीत् ।

तदा राजा— हे मन्त्रिन् ! अहं तु न विश्वसिमि वचनेष्वेतेषाम्, तथापि भवतः पवित्रेणैतेन व्यवहारेण तेषां समाधानं भवेद् इति दुर्जनसन्तोषाय 'किमत्रैकाकी नित्य-मनुतिष्ठति भवान्' इति पृच्छामि। नात्रान्यथा मन्तव्यं भवता, व्याख्येयं च तत् सर्वम्।

ततो गोपालः—'इदमत्र विदाङ्करोतु देवः। नित्यमहमेकाकी कक्षेऽस्मिन् प्रविश्य इमानि राजकीयानि वस्त्राणि उत्तारयामि, परिधरामि च तानीमानि मम जीर्णानि वसनानि कम्बलं यष्टिं च, पश्यामि च पुनरात्मानमादर्शेऽस्मिन्' इत्यवादीत्।

'किमर्थमेवं करोति भवान् नित्यम्' इति राजा पुनः तं पृच्छति।

'हे नृपाल ! अनया चर्यया नित्यमहमात्मानं स्मारयामि—यदहं पूर्वं गोपालोऽभवम्, पुनश्च राजमन्त्री। मदीयं मन्त्रि-पदं भवान् हर्तुं समर्थः, गोपालपदं तु मामकं न कोऽपि हर्तुं प्रभुः। इत्थं च नित्यं स्मरतो मम मन्त्रिपदे स्थित-स्यापि गर्वो न उदेति, तेन च पारयाम्यहं सम्यग् देवादिष्टां लोकसेवां कर्तुम्' इति सोऽब्रवीत्।

इत्थं च मन्त्रिणो वचनं श्रुत्वा नृपालः प्रीतोऽभवत्, अददाच्च तस्मै बहुशः सम्मानं पुरस्कारान्, अभ्यधाच्चेदं तस्य स्तुतिवचनम्—

अन्तःसारैरकुटिलैरच्छिद्रैः सुपरीक्षितैः।
मन्त्रिभिर्धार्यते राज्यं सुस्तम्भैरिव मन्दिरम्॥

# अहिंसा परमो धर्मः

अथ युधिष्ठिरः भीष्मपितामहं पर्यपृच्छत्—हे पितामह ! लोकाः यज्ञान् अनुतिष्ठन्ति । तापसाः तपांसि समाचरन्ति । लोकाः भगवत्प्राप्तये यज्ञान् तपांसि च कुर्वन्ति । केचित् स्वर्गसुखलाभाय, बहवो धनदारपुत्रकामाय वा तानि सम्पादयन्ति । विरलाश्च केवलं धर्माय यज्ञान् तपांसि च कुर्वन्ति, कृपया तेषामनुष्ठानविधिं कथयताम् ।

इत्थं च युधिष्ठिरस्य वचः श्रुत्वा पितामह आह—हे पुत्र ! अस्मिन् विषये नारदेन प्रोक्तां उञ्छवृत्तेः ब्राह्मणस्य पुरातनीं कथां ते कथयामि । सत्यो नाम आसीत् पुरा विदर्भेषु उञ्छवृत्तिः कश्चिद् द्विजो मुनिः । स यज्ञं यष्टुं मनो दधे । सत्यव्रतः स मुनिः यस्मिन् वने निवासमकरोत्, तत्र स श्यामाकं नाम आरण्यं धान्यं सौवर्चलं शाकं च केवलमशनाय लभते स्म । मुनेः तपःप्रभावात् उपलब्धमशनं स्वादु अभवत् । मुनेः आश्रमे शिष्या न आसन् नापि च गावः । पुष्करधारिणी पवित्राचारा पतिव्रता नाम मुनेः भार्याऽभवत् । सापि च पतिमनुवर्तन्ती मूलानि फलानि शाकानि सेवन्ती व्रतानि चानुतिष्ठन्ती कृशा समजायत । सा पत्युः मतेषु हिंसाप्रधानेषु यज्ञेषु सम्मता

नाभवत्। तथापि भार्यात्वेन मुनिस्तामाग्रहेण यज्ञपत्नीस्थाने समुपावेशयत्। साध्वी सा न कामपि हिंसां कदापि अन्वतिष्ठत्। परिधानाय सा जीर्णानां स्वयं पतितानां मयूरपक्षाणां वसनं व्यदधात्। मुनेः शापाद् भीता सा हिंसकेष्वपि यज्ञेषु पत्युरनुवर्तिनी आसीत्।

हिंसकमखेषु द्वेषवती अपि मुनिपत्नी पुष्करधारिणी पत्युः शासनात् तेषु यज्ञेषु अर्धाङ्गभागिनी अभवत्। शुक्राचार्यस्य शिष्येषु पर्णादो नाम ऋषिः तेषु मखेषु होताऽभवत्।

तस्मिन्नेव वने सत्यस्य मुनेः सहवासी कश्चिन् मृगः अवात्सीत्। एकदा सः मनुष्यवाचा तं मुनिमवादीत्—हे ब्राह्मण! त्वया यज्ञच्छलेन पाखण्डमिदमारचितम्। नहि मन्त्राङ्गहीना यज्ञाः सफला भवन्ति। अङ्गहीनस्तवायं मखः। यस्मिन् मखे पशुबलिर्न दीयते, स मखोऽपूर्णः, यज्ञहिंसा तु न हिंसा भवति इति च वेदवादिनो वदन्ति। अतः—

यदि मन्त्राङ्गहीनोऽयं यज्ञो भवति वै कृतः।
मां भोः प्रक्षिप होत्रे त्वं गच्छ स्वर्गमनिन्दितः॥

ततस्तु तस्मिन् यज्ञे साक्षात् सावित्री प्रादुर्भूय मृगस्य बलये तं ब्राह्मणं न्यमन्त्रयत्। ब्राह्मणस्तु बद्धाञ्जलिः ताम् 'हे देवि! न कथमपि सहवासिनं हन्तुं कामये' इति प्रत्युक्तवान्। ततः सा देवी सावित्री निवृत्य यज्ञपावकमविशत्, अगच्छच्च

रसातलम्। अत्रान्तरे हरिणः पुनरागत्य, मे बलिं दत्त्वा गच्छ स्वर्गलोकम्, इति सत्यव्रतं तं विप्रमयाचत। स तु तं परित्यज्य 'गच्छ तत्र गृहम्' इत्यादिशत्।

ततः स हरिणः कतिपयपदानि गत्वा न्यवर्तत, अवदत् च तं ब्राह्मणम्— हे सत्य ! मां हिंसय, त्वया हतोऽहं सद्गतिं स्वर्गं गमिष्यामि। मया दत्तेन चक्षुषा पश्य, ता अप्सरसः गन्धर्वाणां विमानानि च त्वां प्रतीक्षन्ते। तदा सत्यः स्पृहालोलेन चक्षुषा तान् देवान् अपश्यत्। पुनश्च साश्रुभ्यां नेत्राभ्यां तं मृगमालोकयन्, 'अवश्यमस्य बलिना मे स्वर्गः संभवेद्' इत्यचिन्तयत्।

स हरिणस्तु न केवलो हरिण आसीत्। स तु साक्षाद् धर्मः मृगरूपं विधाय बहुभ्यः वर्षेभ्यो वनेऽवसत्। 'पशुहिंसा न यज्ञविधिः' इत्युपदेष्टुं भगवान् धर्मः तं धार्मिकं द्विजमभ्यागच्छत्। तस्यानुभावेन मृगस्य बलिं दातुं चिन्तयतः ब्राह्मणस्य क्षणादेव सर्वं तेजो नष्टम्। निष्प्रभः स द्विजः 'हिंसा न यज्ञीया' इति स्वीचकार।

ततो भगवान् धर्मस्तं सत्यं द्विजमहिंसं यज्ञविधिमुपादिशत्। तदा तस्य भार्या पुष्करधारिणी अपि परमां मुदमभजत्। ततस्तौ दम्पती परमेण तपसा बहून् यज्ञान् अकुर्वाताम्। तौ लोकान् उपादिशताम्—

अहिंसा परमो धर्मः हिंसा पापस्य कारणम्।
न हिंस्यात् सर्वभूतानि एष धर्मः सनातनः॥

गत १४ वर्षों से प्रकाशित अपने क्षेत्र का अद्वितीय

संस्कृतमासिकपत्र

**संस्कृत को सरल, सुलभ, सर्वग्राह्य बनाने के लिए**

# बालसंस्कृतम्

—आपके भारतीयत्व का पुष्ट प्रमाण होगा।

—प्रारम्भिक संस्कृत छात्रों की कठिनाइयों को दूर करेगा।

—आपको हठात् संस्कृतानुरागी बनाएगा।

—सभी भारतीय भाषाओं को जोड़ने वाली कड़ी होगा।

—भारतीय संस्कृति और सभ्यता को सामने रखेगा।

—आपके व्यवहार ज्ञान की वृद्धि में सहायक होगा।

—आपको संस्कृत की सरलता और महत्ता का परिचय देगा।

**आज ही ग्राहक बनिए !** **वार्षिकशुल्क पांच रुपए !**

---

प्राप्ति स्थानम्—

बालसंस्कृतं कार्यालयः

आगरा रोड, घाटकोपर, बम्बई-७७

दिल्ली शाखा—

८०, कोटला रोड, नई दिल्ली-१

# कथानां क्रमः


| | | |
|---|---|---|
| १. धर्मे तु परमं सुखम् | ... | १ |
| २. कुटिलो ग्राममुख्यः | ... | ६ |
| ३. बीरबलस्य नैपुण्यम् | ... | ११ |
| ४. चिरकारी प्रशस्यते | ... | १४ |
| ५. गुरुभक्तः शिवराजः | ... | १८ |
| ६. गुणेषु यत्नः पुरुषेण कार्यः | ... | २२ |
| ७. गुरुभक्तः कौत्सः | ... | २७ |



पुस्तकस्यास्य सर्वेऽधिकाराः स्वाधीनाः सन्ति



द्वितीयं मुद्रणम् ] [ १ मई खिष्टाब्दः १९६२

प्रकाशकः—

वैद्यः-रामस्वरूपशास्त्री

बालसंस्कृतं कार्यालयः, आगरा रोड, घाटकोपर, बम्बई-७७

मुद्रकः—

सार्वदेशिकप्रेस, दरियागंज, दिल्ली-७

# बालनीतिकथाः

सप्तमो भागः

## धर्मे तु परमं सुखम्

आसीत् कश्चिद् दरिद्रो ब्राह्मणः। स धर्मशास्त्राण्यपठत्। स धार्मिकोऽभवत्। स धर्मार्थं धनमैच्छत्। अर्थार्थी स दारुणं तपोऽतपत्। स देवताः पूजयामास। तथापि स धनं नाभ्यगच्छत्। ततः सः—'कतमं देवं पूजयामि, यो मह्यं विपुलं धनं दद्यात्' इत्यचिन्तयत्।

ततः स यक्षपतेः मणिभद्रस्यानुचरं कुण्डाधारं नाम जलधरमपश्यत्। आजानुबाहुं सुन्दरं स्वस्थं च तं युवानं वीक्ष्य—'यत्राकृतिस्तत्र गुणा वसन्ति' इत्ययं मे श्रेयो धास्यतीत्य-

चिन्तयत् । एष देवः ध्यायतो मम पुरस्तात् स्वयमेवोपस्थितः । अयमन्यैः भक्तैः जुष्टो नास्तीत्यवश्यं दास्यति मे प्रभूतं धनम् । ततः स द्विजः धूपैः दीपैः गन्धैः माल्यैः विविधैः बलिभिश्च तं देवमपूजयत् ।

गच्छत्सु कतिपयेषु दिवसेषु देवः प्रीतोऽभवत् । स तु— 'हे ब्रह्मन् ! त्वयाहं भक्त्या पूजितः । अहं तव भद्राय यतिष्ये । ततो रात्रौ कुशस्तरे शयानः स द्विजोत्तमः कुण्डाधारस्यानुयोगेन स्वप्ने यक्षाणां गजानं मणिभद्रमपश्यत् । तत्र देवसभायां देवाः शुभानां कर्मणां कर्तृभ्यः राज्यानि धनानि च प्रयच्छन्त आसन् । तेऽशुभानां कर्मणां कर्तृभ्यः राज्यानि धनानि सुखानि चाच्छिन्दन् । ततो महायशाः कुण्डाधारो देवानां तेषां पश्यतां दण्डवद् भूमौ अपतत् । तदा मणिभद्रो भूमौ पतितं कुण्डाधारं वीक्ष्य— 'हे कुण्डाधार ! किं कामयसे त्वम्' इत्यपृच्छत् ।

तदा कुण्डाधारः—'अयं ब्राह्मणो मम भक्तः, अहमस्य सुखोदयं कामये' । इदं कुण्डाधारस्य वचः श्रुत्वा मणिभद्रोऽवादीत्—'उत्तिष्ठ भोः कुण्डाधार ! भद्रं ते भवतु । धनार्थिनेऽस्मै ब्राह्मणाय च विपुलं धनं दापयामि।' एतत् यक्षराजस्य वचो निशम्य देवानुचरो मनस्यकरोत्—

चलं वित्तं चलं चित्तं चले जीवितयौवने ।
चलाचले च संसारे धर्म एको हि निश्चलः ॥

इति चलेन वित्तेन दापितेनापि किमस्य विप्रस्य कल्याणं भवेत् ? तदस्य धर्मे मतिः स्यात् इति चिन्तयन् स यक्षराजं प्रार्थयत्—

नाहं धनानि वाञ्छामि ब्राह्मणाय धनप्रद ।
अन्यमेवाहमिच्छामि भक्तायानुग्रहं कृतम् ॥
पृथिवीं रत्नसम्पूर्णां महद्वा रत्नसंचयम् ।
भक्ताय नाहमिच्छामि भवेदेष तु धार्मिकः ॥

इत्थं च कुण्डाधारस्य वचः श्रुत्वा सर्वे देवा प्रसन्ना अभवन् । यक्षाणां राजा मणिभद्रस्येदं प्रावोचत्—

प्रीतास्ते देवताः सर्वा द्विजस्यास्य तथैव च ।
भविष्यत्येष धर्मात्मा धर्मे चाधास्यते मतिम् ॥

ततः परोपकाराय लब्धवरः कुण्डाधारो जलधरः वाञ्छितं प्राप्य प्रीतोऽभवत् । द्विजश्च पार्श्वतः तापसानां योग्यानि वल्कल-वसनानि चीराणि कमण्डलुं चापश्यत् । तानि दृष्ट्वा स पण्डितो द्विजो मनस्यमन्त्रयत्—'अहो मे धनस्य कृते दुर्भाग्यम्'।

अयं न सुकृतं वेत्ति को वान्यो वेत्स्यते कृतम् ।
गच्छामि वनमेवाहं वरं धर्मेण जीवितम् ॥

ततः स वनं गत्वा दारुणं तपः आरब्धवान् । अरण्ये सः प्रातः प्रातः शुचिर्भूत्वा देवान् अतिथीन् चापूजयत् । स फलानि मूलानि चाखादत् । ततः पर्णाहारोऽभवत् , ततो जलाहारः, ततश्च

वायुभक्षोऽजायत। इत्थं च बहून् वत्सरान् घोरं तपः अकरोत्। अस्मिन्नन्तरे तस्य प्राणधारणा अवर्धत। तद् वीक्ष्य तस्याश्चर्यमिवाभवत्। पुनश्च—

धर्मे च श्रद्दधानस्य तपस्युग्रे च वर्ततः।
कालेन महता तस्य दिव्या दृष्टिरजायत॥
तस्य बुद्धिः प्रादुरासीद् यदि दद्यामहं धनम्।
तुष्टः कस्यचिदेवेह मिथ्यावाङ् न भवेन्मम॥
ततः प्रहृष्टवदनो भूय आरब्धवान् तपः।
भूयश्चाचिन्तयत् सिद्धः तत्परं सोऽभिमन्यते॥
यदि दद्यामहं राज्यं तुष्टो वै यस्य कस्यचित्।
स भवेदचिराद् राजा न मिथ्यावाङ् भवेन्मम॥

ततः ब्राह्मणस्य तपसा प्रभावेण सौहार्देन च प्रेरितः कुण्डाधारस्तं द्रष्टुमागच्छत्। विप्रश्च तस्य दर्शनेन प्रीतः यथाविधि तमपूजयत्।

ततोऽब्रवीत् कुण्डाधारो दिव्यं ते चक्षुरुत्तमम्।
पश्य राज्ञां गतिं विप्र! लोकांश्चापि स्वचक्षुषा॥
सोऽपि राजसहस्राणि मग्नानि निरये तदा।
दूरादपश्यद् विप्रेन्द्रः स्वेन दिव्येन चक्षुषा॥
पश्य पश्य च भूयस्त्वं कामानिच्छेत् कथं नरः।
स्वर्गद्वारं हि संरुद्धं कामिभिर्मानुषैरिदम्॥
ततोऽपश्यत् स कामं च क्रोधं लोभं भयं मदम्।
निद्रां तन्द्रां तथालस्यमावृत्य पुरुषान् स्थितान्॥

# कुटिलो ग्राममुख्यः

एकस्मिन् अरण्ये बहूनि मूषिकाणां कुलानि आसन्। उन्दुराः कन्दरासु क्षितौ वृक्षेषु क्षेत्रेषु गह्वरेष्वपि च बिलानि विधाय न्यवसन्। ते वन्यानि धान्यानि शाकानि फलानि वा भुक्त्वाऽजीवन्। सुलभमासीत् सर्वं वने निवसतां तेषामाकाङ्क्षितम्।

एकदा देशेऽवग्रहोऽजायत। अरण्येषु क्षेत्रेष्वपि च धान्यानि नोदभवन्। प्रचारेषु घासा नासन्। वृक्षेषु फलानि नासन्। जलाशयाः शुष्का अभवन्। कूपा अपि स्वल्पपानीया अभवन्। खगा मृगाः सरीसृपाश्च क्षुधया तृषा च म्रियमाणा अभवन्। क्षुत्तृड्भ्यां पीडिता मूषिका नैकटिके ग्रामे प्राविशन्। 'बुभुक्षितः किं न करोति पापम्' इति न्यायेन ते लोकानतिशयमपीडयन्। ते गृहाणां भित्तिषु बिलानि कृत्वा न्यवसन्। ते जनानां धान्यान्यखादन्। ते जनानां शाकानि, फलानि, मूलानि संगृहीतानि बीजान्यपि च न्यगिलन्। ते दुग्धानि दधीनि घृतानि तैलानि मरीचान्यपि चाभक्षयन्। ते निर्भीका धृष्टाश्चाभवन्। ते वारिताः ताडिता अपि नापसरन्। बिडालेभ्यः कुक्कुरेभ्यश्चापि तेषां भयं नाभवत्। ते भुञ्जानानां बालानां पुरतो हठाद् भोजनमपाहरन्।

ग्रामनिवासिनः पीडिता अभवन्। ते 'किं कर्त्तव्यम्' इति नाजानन्। ते स्वग्रामस्य मुख्यं ग्रामण्यं गत्वा प्रावोचन्—'हे ग्रामनायक! ग्रामे मूषिकाणामुपद्रवाः सन्ति। वयमतिशयं पीडिताः स्मः।

धावन्ति स्वैरं रथ्यासु मूषिकाः
बिलानि कृत्वा निवसन्ति गेहे।
खाद्यं च खादन्ति बलेन सर्वं
कृन्तन्ति वस्त्राणि च मूल्यवन्ति॥
महानसं ते त्वरिता विशन्ति
हरन्ति भोज्यं पुरतो जनानाम्।
न कुक्कुरेभ्योऽपि न चाखुभुग्भ्यः
भवन्ति भीताः खलु मारकेभ्यः॥

तद् कथयतु भवान् तेभ्यः किमपि रक्षणोपायम्।'

इत्थं च जनानां क्रन्दनं श्रुत्वा सोऽवादीत्—पश्यत भोः मित्राणि! यथा भवतां गृहेषु मूषिकाणां बाहुल्यमस्ति, तथैव ममापि गृहे तेषां द्वन्द्वमस्ति। पश्यन्तु, अत्रापि मूषिकाः आयान्ति प्रयान्ति धावन्ति च सर्वत्रापि। अत्रापि तेषां प्राचुर्यं वर्तते।

इत्येवं परस्परं व्याहरतां तेषां ग्रामे कश्चित् प्राघुणिकोऽविशत्। स वेषेण विपवैद्य इव प्रतिभासते स्म। तस्य हस्ते वीणा आसीत्। स तां वादयन् किमपि विचित्रं मधुरं च गायति स्म। ते च तं वीक्ष्य—'वैद्याः बुद्धिमन्तो भवन्ति। ते बहूनां कठिनानां रोगाणां चिकित्सां जानन्ति। ते औषधानि मन्त्रान् च विदन्ति। पृच्छामस्तावत्तमुपायम्। कदाचित् सोऽस्माकं विपत्तेः विधिं जानीयाद्' इति मन्त्रयाञ्चक्रुः।

केचित्तु ग्राम्यास्तमुपसृत्य सविनयं प्रणेमुः, निवेदयामासुश्च स्वेषां मूषिकेभ्यो विपदम्। सोऽपि च—जानाम्यहं मूषिकाणां विनाशाय मन्त्रविधिम्। विधेः तस्य प्रयोगाय रूप्यकशतं शुल्कं

भविष्यति। यदि स्वीकुर्यात यूयं शुल्कं प्रदातुम्, तर्हि नातिविलम्बेनाहं सर्वान् मूषिकान् हन्तुं शक्तोऽस्मि, इत्युवाच।

ग्रामणीः च तेषाम्—'शतद्वयं दास्यामि, यदि भवान् अद्यैव सर्वान् मूषिकान् अस्माकं गृहेभ्यो निःसारयितुं समर्थः स्यात्, अपरं च कृतज्ञो भविष्यामि चिरम्' इत्यवादीत्।

इत्थं च ग्राममुख्यस्य वचनं श्रुत्वा स वैद्यः रथ्यामुपस्थाय वीणां वादयन् मधुरेण स्वरेण मन्त्रान् गातुं प्रारभत। ततः मूषिकाणां सङ्घाः बिलेभ्यः निःसृत्य तस्य गानं श्रोतुमुपागच्छन्। आबालवृद्धाः सर्वेऽपि उन्दुरा गायकमुपासरन्। सर्वा अपि रथ्याः मूषिकाणां कुलैः पूरिताः अभवन्। तदा स गायको नदीमभिमुखीभूय प्रातिष्ठत। सर्वेऽपि ते तमन्वगच्छन्। स नदीमविशत्। स जानुदघ्ने जलेऽतिष्ठत्। पर्वताद् अवतरन्ती वेगेन च वहन्ती सरित् सर्वानपि तान् उन्दुरान् अवाहयत्। ते जले निमज्जन्तः क्षणादेव व्यनश्यन्।

विषवैद्यः स नदीतटमुपाविशत्। सचेलं स्नात्वा स विधिविहितं मूषिकहत्यायाः प्रायश्चित्तमकरोत्। ततो निवृत्य स पुनरपि ग्राममविशत्। सर्वे ग्रामीणाः खादन्तः पिबन्तः मोदमानाः वैद्येन कृतस्य चातुर्यस्य चर्चां च कुर्वाणा आसन्। ग्रामस्य मुख्यः स्वस्य गृहे पीठे उपविशन् अन्यैः ग्रामीणैः सार्धं कथाप्रसङ्गेषु संल्लापान् कुर्वाणः आसीत्।

वैद्योऽपि समागत्य तस्य पार्श्वे रक्षितेऽन्यस्मिन् पीठे समुपाविशत्। 'इदानीं मूषिका नष्टाः, गता च पीडा युष्माकम्,

ददातु मम शुल्कं शतद्वयं भवान्' इति च सोऽवादीत्। परन्तु लब्धमनोरथोऽपि लुब्धः स ग्राममणीः वैद्यस्य शुल्कं दातुं प्रस्तुतो नाभवत्। स तु—'मृताः मूषिकाः, सिद्धमस्माकं कार्यम्, अदत्तेऽपि च शुल्के किमयं वराकः करिष्यत्यस्माकम्' इति मनसि चिन्तयन्नवादीत्—वैद्यराज! कुग्रामनिवासिनः केवलं दरिद्रा वयम्। कुतो भवते दातुमानयामः शतद्वयम्। 'शतद्वयम् दास्यामि' इतीदन्तु केवलं ममोपहासजल्पितमासीत्। इदानीमहं केवलं रूप्यकपञ्चकं भवते दातुं शक्तः। कृपया गृहाण पञ्चकम्, गच्छ च गृहम्।

ततः स विपन्नवैद्यश्च—'महानुभाव! शतद्वयं दातुं प्रतिज्ञातं भवता। इदानीं सिद्धे कार्ये किन्तु प्रत्यादिशति वद भवान्? न शोभते ते प्रत्याख्यानमिदम्। शतद्वयं भवता दातव्यमेव। अन्यथा तु हानिरपयशश्च भवतो भविष्यति। जानाम्यहमन्यथाकर्तुमपि। वीणायामहं विपरीतं स्वरं साधयन् तव विनाशमानेतुं शक्नोमि। किं बहुना, साधरा विपरीताश्चेद् राक्षसा एव केवलम्, इति जानातु भवान्' इत्यकथयत्।

इदं तु विपन्नवैद्यस्य वचनं श्रुत्वा ग्राममुख्यः स क्रुद्धो भूत्वाऽब्रवीत्—गच्छ रे वञ्चक! नाहमिदानीं काणवराटकमपि तुभ्यं दातुमिच्छामि। यथेच्छं कुरु सत्याग्रहं द्वारेऽस्माकम्। वादय च तां ते वीणां तावद्, यावत् तस्याः तारायां भग्नो भवेत्। मूषिकाः सर्वे मृताः, सिद्धं नः प्रयोजनम्। गच्छ वा त्वं स्वगृहम्। उत्तीर्णे तु परे पारे नौकायाः किं प्रयोजनम्। अन्येऽपि ग्राम्याः स्वेषां मुख्यस्य पक्षं समर्थयामासुः अनुवदन्, नेदानीं

वयं काणवराटकमपि तुभ्यं दातुं कामयामहे। कुतस्ते शतद्वयम्। गच्छेदानीं कुशली गृहम्, अन्यथा चान्यथैव ते भविष्यति, इति चापि जानीहि।

इत्थं च ग्रामीणानां जल्पितानि श्रुत्वा स विषवैद्यो रथ्यां प्रविश्य वीणां वादयितुं प्रारभत। अस्मिन् वारे तस्य वीणायाः स्वरं श्रुत्वा गावो महिष्यः छाग्यश्चापि सर्वा अपि दुग्धदाः पशवः समागच्छन्। स नदीमुखः प्रातिष्ठत। पशवोऽपि तमन्वगच्छन्। स तटेऽतिष्ठत्, परन्तु पशवो न स्थित्वा नदीमविशन्। नदीवेगस्तान् अवाहयत्। ते सर्वे जले न्यमज्जन्। इति निशाम्य सर्वेऽपि ग्रामीणाः—अहो! अविचार्य कृतमस्माभिः, इत्यन्वशोचन्। ततो भीतास्ते सत्वरं मुख्यस्य गृहं गत्वा तमूचुः—देहि साम्प्रतं वैद्यस्य शतद्वयम्, पूजामर्हति मान्त्रिकः। अन्यथा रुष्टः सः बालकान् अस्माकं नद्यां निमज्जयेत्, इति नो वर्तते भयम्।

ततो ग्रामणीः वैद्याय एकोत्तरं शतद्वयं दत्त्वा प्रणनाम। सोऽपि च धनं गृहीत्वा गृहाभिमुखोऽभवत्। तदानीं सर्वे ग्रामीणाः स ग्राममुख्यश्चापि पश्चात्तापमकुर्वन्।

एवं हि लोके सरलान् जनान् वञ्चयितुं यतमाना मायिनो जनाः स्वेषां कृतानां दुष्कर्मणां फलमश्नुवते। इदमत्र युज्यते वक्तुम्—

दुर्जना नास्तिकाः पापाः कृतघ्नाः स्वार्थदृष्टयः।
वञ्चकास्त्यक्तमर्यादा लभन्ते प्राणसंशयम्॥

---

# वीरबलस्य नैपुण्यम्

सर्वः एव जानाति वीरबलस्य नामधेयम्। स यवनराजस्य चक्रवर्त्तिनः अकब्बरस्य सभायां सचिवः आसीत्। स परमः चतुरः मतिमतां श्रेष्ठश्च आसीत्।

वीरबलस्य चातुर्येण बुद्धिशालितया च पराजिता अन्ये सचिवाः सभ्याः च ईर्ष्यया द्वेषेण च तस्य परोक्षवैरिणः अजायन्त। ते तं हन्तुं प्रयोगान् युक्तीश्च चिन्तयाञ्चक्रुः।

नरेषु नापितस्तु धूर्तः भवत्येव, अतस्ते नृपतेः नापितमेव कार्यसाधने करणं कल्पन्ते स्म। राजनापितः स क्षौरकर्मणि दक्षः धूर्त्तः वावदूकश्च अभवत्। एकदा स नृपालस्य क्षौरं कुर्वाणः बहून् कथाप्रसङ्गान् कथयति स्म। मन्त्रिभिः पाठितः सोऽवसरं लब्ध्वा वक्तुं प्रारभत—हे राजराज! अहं देवस्य पारम्परिकः सेवकोऽस्मि। तत्र भवतां श्रीमतां पूर्वपुरुषाणां क्षौरं मम एव पूर्वजा अकुर्वन्। राज्ञा हुँकृतम्। तदा स नापितः पुनरवादीत्—हे महाराज! स्वर्गलोकं गतानां भवतः पितृपितामहादीनां ननु लब्धः कदापि कोऽपि वृत्तान्तः? नरपतिः नकारं कृतवान्। वाचाटः स नापितः पुनः प्रावोचत्—'तर्हि श्रीमता कोऽपि दूतः किं न प्रेष्यः, कुशलवृत्तं च स्वपूर्वजानां किं न प्राप्तव्यम्?'

नृपतिः—ननु कः तत्र गच्छेत्?

क्षौरी—देव! श्रीमतां प्रधानः सचिवः वीरबलः चतुरः। स एव इदं कार्यं कर्तुं देवलोकं गन्तुं शक्तः। किं न सत्वरं प्रहीयते स सुरपुरम्?

अन्यस्मिन् दिने महीपतिः वीरबलं समाहूय, 'त्वं स्वर्गं गत्वा मम पितॄणां कुशलवृत्तान्तं समानय' इति समादिशत्। वीरबलस्तु सहसा सम्मुखे समुपनतं मृत्युमेवापश्यत्।

'अस्ति तावत् कापुरुषाणां राजभृत्यानां षड्यन्त्रमिदम्।' इति स क्षणं विचार्य, धैर्यं धृत्वा व्यजिज्ञपत्—राजराज! सुदूरं यमपुरं मया गन्तव्यं वर्तते, इति यात्रायै केचित् संभाराः कल्पनीयाः सन्ति। एतदर्थं कृपया मासस्य अवकाशः आवश्यकमुपकरणं च देयं वर्तते तत्र श्रीमद्भिः।

नृपालस्तु वीरबलस्य अवकाशं स्वीकृत्य, कांक्षितं धनराशिम्, अन्यदपि च सर्वमपेक्षितं युगपदेव तस्मै प्रायच्छत्। सचिवः यात्रासंभारकल्पनायै स्वं गृहं प्रातिष्ठत। दक्षः स मासाभ्यन्तरे स्वस्य आवासात् श्मशानं यावत् सुगुप्तां सुरङ्गां कारितवान्। मासान्ते पुनः स राजसभायामुपस्थितः,सर्वैः सह स्नेहेन मिलित्वा प्रयाणनमस्कारं कृतवान्। नृपेण आदिष्टाः राजपुरुषास्ते कापट्येन साश्रुभिः नेत्रैः पश्यन्तः रथेन तं श्मशानमनयन्। स्नानवस्त्र-गन्धमाल्यादिभिः ते तस्य पर्यन्तां पूजामकुर्वन्। मनसि प्रसन्नास्ते प्रत्यक्षे वियोगदुःखं दर्शयन्तः, यावनीभिः रीतिभिः वीरबलं भूमिगर्ते ( कब्रे ) निदधुः, जग्मुश्च स्वस्वगृहाणि।

ततो वीरबलं मृतं मन्यमानास्ते—'इदानीं कण्टकं गतम्' इति मिथः संलपन्तः आदानप्रदानसम्मानगोष्ठीः चक्रे। नापिताय तस्मै प्रचुरं धनं वितीर्य ते स्वस्था अभवन्। वीरबलोऽपि सुरङ्गमार्गेण पुनः स्वगृहमविशत्।

ततो गच्छत्सु दिवसेषु श्मश्रुजटाकलापः वीरबलः सहसा उपातिष्ठत्। सर्वे राजपुरुषा मनसि भीताः चकिताश्च-

भवन्। 'स प्रेतो भूत्वा पुनरायातः' इति ते मेनिरे। वीरबलः देशाधिपतिं प्राणमत्।

नृपतिः—अहो! स्वागतं ते, वीरबल! निपुणोऽसि, धन्योऽसि च त्वम्। वर्तते कच्चिद् अनामयं स्वर्गे स्थितानां मम पूर्वपुरुषाणाम्?

वीरबलः—सर्वथा वर्ततेऽनामयम्। ते कुशलिनः स्वस्थाः प्रसन्नाश्च सन्ति। स्वर्गे सर्वं भोग्यं भोज्यं पेयं वसनं निवसनं कांक्षितं चापि वर्तते तेषां सुलभम्।

नृपतिः—ननु वर्तते तेषां परमपि किमपि कांक्षितम्?

वीरबलः—महीपते! सर्वं तु वर्तते तत्र सुलभम्, किन्तु

नृपतिः—किन्तु इत्यस्य कोऽर्थः?

वीरबलः—देव! स्वर्गे नापिताः न सन्ति, इति तेषां चौरं वर्तते रुद्धम्। 'यदि कश्चित् चतुरः चौरी प्रेषितः स्यात्, तर्हि समीचीनं भवेद्' इति ते संदिशन्ति।

स राजनापितोऽपि तत्र सभायामुपस्थित आसीत्। वीरबलेन समानीतं संदेशं श्रुत्वा स भयेन संजातकम्पनोऽभवत्। स आत्मानं मृतमिवामन्यत। स मनसि तान् राजपुरुषान् बहुशः अशपत्।

नृपतिस्तु तत्क्षणादेव तं नापितं स्वर्गं प्रापयितुं भृत्यान् आदिशत्। ते च तं श्मशाने नीत्वा त्वरितमेव वह्निसाद् अकुर्वन्।

इत्थं च वीरबलस्य विनाशे साधनतां गतः स राजनापितः स्वयमेव विनाशाभिमुखोऽपतत्। संसारेऽस्मिन् यः परेषां हानिं कामयते करोति वा स स्वयमेव विनाशं लभते।

इदं चात्र कवयो भाषन्ते—

> दुर्जनोऽन्यविनाशाय यतते नैव विस्मयः।
> आश्चर्यं त्विदमेवात्र स्वयमेव स नश्यति॥

# चिरकारी प्रशस्यते

महर्षेः गौतमस्य बहवः पुत्रा आसन्। तेषु कनिष्ठः माता-पित्रोःपरमः प्रियो महाप्राज्ञश्च आसीत्। स्वजनास्तं वत्सलं प्राहुः। स सर्वेषु कार्येषु चिरयति स्म। स रात्रौ चिरेण शेते स्म। प्रातः चिरेण प्रबुध्यते स्म। स चिरेण स्नाति स्म। स चिरेण भुङ्क्ते स्म। इत्थं च स सर्वाणि कार्याणि चिरं विचार्य करोति स्म। कर्त्तव्येषु प्रवर्तमानः स चिरं चिन्तयति स्म। अल्पबुद्धयः पौरा जनास्तमलसं मत्वा 'चिरकारी' इत्यनेन नाम्ना आहुः। ततस्तस्य चिरकारी इत्यन्वर्था संज्ञाऽभवत्।

एकदा केनापि महताऽपराधेन क्रुद्धः तस्य पिता मुनिर्गौतमः स्वस्य पत्न्यां, चिरकारिणो मातरि, कुपितः तां हन्तुं पुत्रं तमादिशत्।

'जहीमां तव जननीम्' इत्यादिश्य मुनिः गौतमः स्नातुं नदीमगच्छत्। स तत्र शुचिर्भूत्वा जपितुमतिष्ठत्।

गृहे चिरकारी हस्ते शस्त्रं गृह्णानः 'करोमि, न वा करोमि, किं करोमि, कथं वा करोमि, कथं नु कुर्यां पितुराज्ञाम्, कथं च मातरं हन्याम्, पितुराज्ञा परो धर्मः, मातृरक्षणमपि मे स्वधर्मः, न कोऽपि पितरमवज्ञाय प्रतिष्ठां लभते, नापि च कश्चित् मातरं हत्वा जातु सुखी भवति। पितुरादरः पुत्रेण कर्त्तव्यः। मातृरक्षापि सुतस्य कर्त्तव्यम्। पुत्रः पितुः प्रतिनिधिः, 'आत्मा वै पुत्रः' इति श्रुतेः। पिता हि शीलस्य सदाचारस्य गोत्रस्य च स्वस्य रक्षायै मां मातरि निधत्ते स्म। अहं च मातापित्रोः द्वयोरप्यात्मा। तौ मम जन्मनः कारणम्। पिता मे जन्मदः पोषकः अध्यापकश्च

विद्यानाम्। स गुरुषु श्रेष्ठः। तस्यादेशो धर्मः। पुत्रः पितुः प्रीतिपात्रम्। पिता तु शरीरादीनि सर्वाणि देयानि पुत्राय प्रयच्छति। इति स पूज्यतमो देवः।

तस्मात् पितुर्वचः कार्यं न विचार्यं कदाचन।
पातकान्यपि पूयन्ते पितुः शासनकारिणः॥
पिता धर्मः पिताः स्वर्गः पिता हि परमं तपः।
पितरि प्रीतिमापन्ने सर्वाः प्रीयन्ति देवताः॥

भवन्ति खल्वाशिषः पितुः परुषाक्षराण्यपि कृते कल्याणाय पुत्राणाम्। यश्च मधुरैरभिनन्दनैः वचोभिः स पुत्रस्यादरं दर्शयति स तु शापाय कल्पते। तस्य गाल्योऽपि आशीर्वचांसि इति मन्ये। इत्थं च पिता पुत्रस्य परमं पूज्यं स्थानम्। अस्तु, इदानीं मातुः गौरवमपि चिन्तयामि। यदिदं मे पाञ्चभौतिकं शरीरम्, तस्यास्य पावकस्यारणिरिव मम जननी कारणम्। माता हि सर्वदा माति पुत्रम्। सा खलु शरणं पुत्राणाम्। यस्य गृहे माताऽस्ति स सनाथः स सुखी लोके। यावन्माता जीवति तावत् पुत्रा मोदन्ते। यस्य पुत्रस्य माताऽस्ति तस्य चिन्ता नास्ति। दरिद्रोऽपि यः मातः! इति सम्बोध्य गृहं विशति स धन्यः। माता खल्वन्नपूर्णा पुत्रस्य। समर्थाऽसमर्थाऽपि च माता रोगिणं दुर्बलं वा सुतं रक्षति सेवते च। सुतो हि मातापित्रोः स्नेहग्रन्थिः। माता जनयति, सा वर्धयते, सा लालयते। सा सुतं वीक्ष्य सुतरां प्रसन्ना भवति। सा हि प्रथमा गुरुः। मात्रा विहीनो जनः विविधानां दुःखानां चिन्तानां च भाजनं जायते। माता खलु रक्षादेवता। न तां विना केवलं गृहं शरणम्।

माता यस्य गृहे नास्ति भार्या च प्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥
नास्ति मातृसमा छाया नास्ति मातृसमा गतिः ।
नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रिया ॥

अत एव च माता मम परमं गौरवस्थानमर्हति । सा हि मातृदैवतम् । 'मातृ देवो भव' इति इति श्रुतेः । 'जननी जन्म भूमिश्च स्वर्गादपि गरीयसी' इति च लोकोक्तेः ।

इत्थं च माता पूजनीया रक्षणीया च । न सा कदापि वधमर्हति । पितुरादेशोऽपि च नोल्लंघनमर्हतीति मे उभयतः पाशा रज्जुः । तरणं नैव जानामि, इतो व्याघ्रः, इतो नदी । न पश्यामि कर्त्तव्यम् । किंकर्त्तव्यविमूढोऽस्मि ।

पितुराज्ञा परो धर्मः स्वधर्मो मातृरक्षणम् ।
अस्वतन्त्रं हि पुत्रत्वं कं पृच्छामि करोमि किम् ॥

एवं सुचिरं विचारयतः चिरकारिणः दीर्घः कालो व्यतिक्रान्तः । अस्मिन्नन्तरे मेधातिथिः मुनिर्गौतमः पत्न्या अनौचित्ये विचारयन् 'स्वल्पेऽपराधे महान् प्राणदण्डः मया कृतः' इति भृशं सन्तप्तः साश्रुलोचनः महान्तं पश्चात्तापमुपागमत् । ततः स गृहं निवर्तमानः क्रोधवशेन मया महदनुचितं कृतम्—

क्रुद्धः पापं न कुर्यात् कः क्रुद्धो हन्याद् गुरूनपि ।
क्रुद्धः परुषया वाचा नरः साधूनधिक्षिपेत् ॥

इत्यचिन्तयत् । अहो ! पापोऽस्म्यहं यः साध्वीं भार्यामवधिषम् । कः मां पातकादस्मात् तारयिष्यति । हे पुत्र ! चिरकारिन् ! त्वमद्य तत्त्वतः चिरकारी भूत्वा मां रक्षितुमर्हसि ।

हे पुत्र ! अद्य त्वं मां तव मातरमात्मानं च रक्ष पातकेभ्यः। त्वं सहजः चिरं विचारशीलः। अद्य यदि त्वया चिरायितं भवेत् तर्हि तव चिरकारिता सफला स्यात्। हे ममात्मन् ! आगर्भात् तव माता चिरं त्वयि बद्धाशा आसीत्। अद्य तस्या वधे चिरयन् रक्ष त्वं तामबलाम्। हे पुत्र ! अद्य चिरकारी भूत्वा सफलां कुरु तव चिरकारिताम्।

इत्थं च पश्चात्तपन् मुनिराश्रमस्य द्वारं प्राप, ददर्श चात्मजं चिरकारिणं तत्र मौनेन स्थितम्। स तु पितरं दृष्ट्वा परमदुःखितः पितुः पादयोः पपात। मुनिः शिरसा नतं पुत्रं सकुशलां पत्नीं च दृष्ट्वा परां मुदमगच्छत्। स दोर्भ्यां पुत्रं परिष्वज्य भृशमभिनन्द बभाषे च—हे पुत्र ! यो जनः सर्वाणि कार्याणि विचार्य करोति स पश्चात्तापं न लभते, यश्च रोषं चिरं धारयति न सः पश्चात्तापयोग्यं कर्म किञ्चिदुपपद्यते। यः चिरं वृद्धान् पण्डितान् शिष्टान् धर्मं च निषेवते, पृष्टोऽपि चिरं विचार्य भाषते, यश्चिरं यमनियमादिभिरात्मानं वशे नयति, यश्चिरमिन्द्रियाणि सन्नियम्य विषयेषु च प्रवर्तते, न स कदापि परितप्यति। यः स्त्रीणां बन्धूनां भृत्यानां मित्राणां च संदिग्धेष्वपराधेषु दण्डधारणे चिरयति, न स पापमवाप्नोति। हे पुत्र ! रक्षितमद्य चिरकारिणा त्वया स्वकीयं कुलम्। इत्थं च स गौतमः प्रीत्या हर्षेण च युक्तः पुत्रमभिनन्द्येदमब्रवीत्—

चिरकारक ! भद्रं ते चिरकारी चिरं भव।
चिराय यदि ते सोम्य ! चिरमस्मि न दुःखितः॥
रागे दर्पे च माने च द्रोहे पापे च कर्मणि।
अप्रिये चैव कर्त्तव्ये चिरकारी प्रशस्यते॥

# गुरुभक्तः शिवराजः

को न जानाति लोकेऽस्मिन् छत्रपतेः शिवराजस्य विश्रुतं-नामधेयम् । मर्यादापुरुषोत्तमः श्रीरामो यथाऽनन्तैः स्वकैः गुणैः प्रजावल्लभोऽभवत् तथैव गोविप्रदीनेषु दयालुः धर्म्मवीरः शिवराजोऽपि लोकानां प्रिय आसीत् ।

महाराजः शिवराजः समर्थस्य गुरोः श्रीरामदासस्य परमो भक्तः शिष्यश्चासीत् । महात्मा रामदासः श्रीरामस्य परमो भक्त आसीत् । सिद्धो योगी स तापसः सदैव रामस्य नामानि जपन् वनेषु ग्रामेषु नगरेषु तीर्थेषु च भ्रमन् श्रीरामे भक्तिं कर्तुं लोकान् उपादिशत् ।

चातुर्मास्येषु स एकत्र उटजे निवसन् श्रीरामं भजमानो दिनानि अगमयत् । तस्य बहवः शिष्याः अभवन् । नित्यं सहस्रशो जनाः महात्मनः श्रीरामदासस्य दर्शनं कर्तुं सुदूर-दूरात् समागच्छन् । परमया श्रद्धया समर्थं गुरुवरमाराधयां-चकार शिवराजः । संकटापन्नेषु समयेषु स गुरुदेवमुपेत्य, तस्य आशिषः प्रसादं च लब्ध्वा प्रायेण मनोरथान् अवाप्नोत् । मौगलानामाक्रमणसमये श्रीशिवराजः स्वस्य चिन्तां गुरवे न्यवेदयत् । समर्थो गुरुस्तु तमाशिषा छन्दयित्वा 'युध्यस्व विगतज्वरः' इति समादिशत् । शिवराजस्तु गुरोराशीर्भिः यवनान् विजित्य सुतरां गुरौ दृढभक्तिरभवत् ।

शिष्यस्य परीक्षार्थं गुरुः वशिष्ठः नन्दिन्याः सेवायां तत्परस्य महाराजदिलीपस्य यथा परीक्षामकरोत् , तथैव श्रीरामदासोऽपि गुरुभक्तस्य शिवराजस्य परीक्षां कृतवान् ।

प्रावृषः समय आसीत् । गर्जन्तो घनाः धारासारं जलमसुञ्चन् । घनान्धकारा रात्रिः भयमुत्पादयामास । गुरुः श्रीरामदासः आसने निविष्टः महत्या उदरपीडया वैकल्यमभजत् । समन्ताद् उपस्थिताः शिष्या उपचारान् अकुर्वन् । शिवराजोऽपि चिंतिन्तेन चेतसा गुरुसेवासमासक्तोऽभवत् । सर्वे उपक्रमाः विफला अभवन् । न गुरोः पीडा कथमपि न्यूनाऽभवत् । तदा स आह—शिवराज ! इदानीं मम जीवनस्य पर्यन्तः सम्प्राप्तः । नातिशोकाकुलो भूयाः । मयि उपरते सावधानतया त्वं करिष्यसि लोककार्याणीति मन्ये ।

इत्थं च गुरोः वचनमाकर्ण्य शिवराजस्य नेत्रयुगलमश्रुपूरितमासीत् । तदा शोकसन्तप्तचित्तः सः—गुरुवर्य ! वर्तते ननु भवतः पीडायाः किमप्यौषधम् ? अस्ति चेत् , सर्वस्वदानेनाप्यहं तदानेतुं प्रस्तुतोऽस्मि । किं करोम्यहम् इति सत्वरमादिशतु भवान् ।

इति श्रुत्वा गुरुरवादीत्—शिवराज ! औषधं नास्ति इति तु वक्तुं न युज्यते । यत्रापायः, तत्रोपायोऽपि भवत्येव भगवतो विधाने जगत्यस्मिन् । परन्तु, वत्स ! औषधस्य तस्यानयनमतिकठिनमिति मन्ये ।

इत्थं च गुरोः भाषितमाकर्ण्य सर्वं शिष्यमण्डलं सञ्जातौत्कण्ठ्यमजायत । सर्वेऽपि ते तदौषधमानेतुं सज्जा अभवन् । ततश्च शिवराजः—गुरुदेव ! कथयतु भवान् तस्य भेषजस्य

नामधेयम् । अहं तदानेतुं शक्तोऽस्मि । तत्र भवतः प्रसादेन नास्ति मे किमपि दुष्प्राप्यम् । अहं प्राणव्ययेनापि तदानेतुं यतिष्ये इति स प्रार्थयत् ।

गुरुश्च शिवराजस्य साहसं परीक्षितुं पुनरब्रवीत्—शिवराज ! न सिंहीदुग्धमन्तरेदानीं वर्तते मम रोगस्य किमप्यौषधम् । तच्च सुदुर्लभं वर्तते साम्प्रतम् ।

को नु प्राणहारे सङ्कटे पातयेदात्मानम् ? इति मौनमासीत् सर्वं भक्तमण्डलम्, विना शिवराजेन । शिवराजस्तु अनुजानातु मामौषधमानेतुं गुरुदेवः इति भूयः साञ्जलिः प्रार्थयत् । गुरुस्तु— मा तात ! मम वृद्धस्य कृते गमय बहुमूल्यं तव जीवनम् । मा गमः निशीथेऽधुना प्राणापायमरण्यमिति अकथयत् । शिवराजोऽपि गुरुदेव ! भवतोऽनुभावेन न मे किमपि सुदुर्लभम्, अवश्यमहं सिंहीदुग्धमानेष्यामि इति स पुनः पुनस्तमन्वबध्नात् ।

ततश्च तस्यानुबन्धगृहीत इव महाकवेः कालिदासस्योक्तिं संस्मरन्नाह श्रीगुरुदेवः—

एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम् ॥

शिवराजस्तु खड्गहस्तो गुरुं परिक्रम्य तस्य पादयोरपतत् । सुप्रीतो गुरुदेवस्तु बाहुभ्यां तमादाय इदानीं गच्छ, वत्स ! आनय सिंहीपयः, अम्बा भवानी ते रक्षां करिष्यति इत्याशिषः प्रायुङ्क्त ।

इति गुरुणादिष्टो हस्तगृहीतपयःपात्रः शिवराजोऽरण्याभिमुखः प्रतस्थे । मेघा घोरमगर्जन्, विद्युतो व्यद्योतन्त, जलानि अवर्षन्, प्रगाढान्धकाराः अवर्धन्त । गुरुभक्तः शिवराजो

वनाद् वनं व्यचरत्। स सिंह्याः अन्वेषणे दत्तदृष्टिरभवत्। विकल्पाः प्रादुरभवन् तस्य चेतसि। गुरोः सेवायां सफलो भविष्यामि नवेति सशंयदोलासमारूढमासीत् तस्य स्वान्तम्।

अत्रान्तरे शिवराजः कस्यचिन्महावृक्षस्य तले तिष्ठन् चिन्तातुरः सर्वतो दृष्टिमपातयत्, अपश्यच्च स्वयमागच्छन्तीं शावानुगां दोग्ध्रीं सिंहीम्। स नम्रभावेन तां प्रार्थयत्—

हे मृगराज-भामिनि! मम गुरोरुदरे महती पीडा वर्तते। देहि तन्निवृत्तये ते पयोऽमृतम्। तव दुग्धमात्रमेव मे गुरोः रोगस्य भेषजम्। गुरोः शरीरे भव मे दयालुः।

इदं नृपालस्य वचनं निशम्य परमं सौम्यभावं प्रकटयन्ती सा तरुतलमागत्य तस्थौ। शिवराजोऽपि लब्धसङ्केत इव निर्भयः तस्या दुग्धं पात्रेऽधोक्, आनयच्च त्वरितया गत्या गुरोः समीपम्। सोऽपि च तत् पीत्वा सद्यः स्वस्थो भूत्वा तत्क्षणादेव रोगशय्याममुञ्चत्।

इदमद्भुतं शिवराजस्य कार्यमवेक्ष्य सर्वं शिष्यमण्डलं चकितं मुदितं चाभूत्। ततः प्रसन्नो गुरुदेवः शिष्यस्य शिरसि वरदं हस्तं प्रसार्य 'वर्धतां वत्स! विजयेन वैरिणाम्' इति वरेण तं छन्दयामास। छात्राः! गुरुसेवा हि शिवराजस्य चरिते साफल्यस्य निदानम्। समर्थे गुरौ तस्य दृढा श्रद्धा परमा प्रीतिश्चाभवत्। स सदैव गुरुं श्रीरामदासं देवतामिवऽपूजयत् अलभत च तस्य प्रसादेन सर्वत्र कार्येषु साफल्यम्। गुरौ हरौ च तस्य समाना भक्तिरासीत्।

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुः साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नमः॥

# गुणेषु यत्नः पुरुषेण कार्यः

आसीत् पुरा मुम्बापुर्यां धनप्रसादो नाम कश्चित् श्रेष्ठी। सर्वस्मिन् प्रदेशे तस्य व्यापारप्रतिष्ठानानि वर्तन्ते स्म। सहस्रशो जना नित्यं तस्य कार्यालयेषु कर्म्मव्यापृता आसन्।

सोऽयमेकदा स्वस्य कार्यालये कंचित् कार्यसचिवं कामयते स्म। स वृत्तपत्रेषु 'अस्माकं कार्यालये विश्वासस्थानयोग्यः कुशलो युवाऽपेक्ष्यते, योग्यतानुसारं भविष्यति वेतनम्' इति विज्ञापनमकरोत्।

अन्यस्मिन् प्रभाते बहूनां साक्षराणां कृताक्षराणां च प्रार्थनापत्राणि सम्प्राप्तानि। श्रेष्ठी च सर्वाणि तानि सादरं सावधानं चाऽपठत्, व्यभजत् च पुनस्तानि द्वयोः पुञ्जयोः। एकस्मिन् पुंजे स क्षेप्तुं योग्यानि प्रार्थनापत्राणि अन्यस्मिन् च तस्मिन् स पुनः पठितव्यानि तानि समगृह्णात्।

ततो घण्टीं कृत्वा स प्रतीहारमाकार्य क्षेप्याणि तानि प्रत्याख्याय बहिः क्षेप्तुमवादीत्।

प्रत्याख्यातानि च तानि सर्वाणि प्रार्थनापत्राणि—कानिचित् परेण लिखितानि, कानिचिद् अशुद्धिबहुलानि, कानिचिद् असुन्दराक्षराणि, कानिचिद् असारशब्दप्रचुराणि, अन्यानि च

न सावधानेन मनसा लिखितानि आसन्। क्वचिद् दिनाङ्क एव नासीत्, अन्यत्र च हस्ताक्षराण्येव नाभवन्। 'न कोऽपि कार्यार्थी नैपुण्येन विनाकृतमसावधानमुन्मुक्तप्रायं कार्यसचिवं रचेत्' इत्यभिधाय श्रेष्ठी सर्वाण्यपि तादृशानि प्रार्थनापत्राणि प्रत्याख्यात्।

अन्येषां च कृते 'द्वादश्यां तिथौ एकादशवादनसमये मम कार्यालये युष्माभिरुपस्थातव्यम्' इति पत्रमलेखीत्। स्वयं च स नियते तिथौ निर्दिष्टात् समयात् पूर्वमेव कार्यालयमुपस्थाय समये समागतानां सर्वेषां तेषां नामानि, आगमनवेलां चालिखत्। सम्यग् दशवादनसमये स नामानि लिखितुं विरराम। ये च विलम्बेन सामायातास्तेषां तु नामानि स तत्क्षणादेव प्रत्याख्यात्।

अभवन् तेषां समयमतिक्रम्य सम्प्राप्तानां क्षमाप्रार्थनाश्लक्ष्ण-वचनानि अध्यारोपाश्चापि, तथापि न श्रेष्ठी तेषां परिदेवनं किमपि कर्णेऽकरोत्। तेष्वेको युवा यद्यपि सुतरामधीरो लज्जितश्च प्रतिभाति स्म, तथापि शालीनतया न स किमपि उक्त्वा बहिर्द्वारादेव शनैश्चराभ्यां पादाभ्यां हताशेन हृदयेन च प्रतिनिवर्तमान इवासीत्। श्रेष्ठी च दूरादेव तथाभूतं तमपश्यत्।

'मुखमेव मनोगतं निवेदयति' इति न्यायेन श्रेष्ठी तं संपरीक्ष्य पुरस्ताद् आगन्तुं संकेतमकरोत्। समीपमागतं च तं पुनः विलम्बेन आगमनस्य कारणमपृच्छत्।

सोऽपि च प्रणम्य नम्रतया 'श्रीमन्! मार्गे आगच्छन् अहं कस्यचित् पान्थस्य 'चौरः, चौरः' इति चीत्कारमश्रौषम्। ततश्च सत्वरमुपेत्य पान्थं, पलायमानं चौरम्, तमनुधावन्तं च रक्षापुरुषम् (police man) एकमपश्यम्। चौरः पान्थस्य भार्यायाः भूषणानि हस्तादाच्छिद्य पलायमान आसीत्। अहमपि वराकस्य रक्षार्थं धावन् रक्षापुरुषमन्वसरम्। न तत्र जाङ्गले मार्गे कश्चिदन्यः साहाय्यकरोऽभवत्। द्वाभ्यामेवावाभ्यां चौरो गृहीतः नीतश्च रक्षाधिष्ठानम् (police station)। अहमिदानीं तत एव धावमानः आगच्छामि, इदं स्वामिन्! ममागमने विलम्बस्य कारणम्।'

वरम्, न कापि हानिः, कृतं त्वया नागरिकस्य कर्त्तव्यम्, इत्युक्त्वा श्रेष्ठी युवकस्य तस्य नाम पुनः परिसंख्यातायां सूच्यामलिखत्।

ततश्च श्रेष्ठी सर्वेभ्यस्तेभ्यः एकैकमभिज्ञानपत्रमददात्। पत्रे तस्मिन् परिसंख्याने समाविष्टानां सर्वेषां प्रार्थिनां नामानि यथासंख्यं लिखितान्यासन्। 'अहं घण्टामितेन समयेन पुनरागत्य युष्मभ्यं निर्णयं दास्यामि, प्रतीचन्तां ममागमनम्' इत्यभिधाय श्रेष्ठी पुनरपि कक्षान्तरमविशत्। स

मुख्यं द्वारं पिधाय परेण द्वारेण सोपानमार्गे रहसि आस्थाय 'किं ते सर्वे परस्परं कथयिष्यन्ति, कथं वा व्यवहरिष्यन्ति' इति ज्ञातुं तान् निपुणमपश्यत्। ततो घण्टानन्तरं स श्रेष्ठी पुनः प्रविश्य अस्मै देवदत्ताय मया विश्वासस्थानं दत्तम्, इति स्वनिर्णयं तान् अश्रावयत्।

तच्छ्रुत्वा सर्वेऽपि ते विरोधमारभन्त। न भवता अस्माकं कस्यापि परीक्षा कृता, न परिचयो नापि नाम वा गृहीतम्, अविचार्य एव दत्तो निर्णयः। नेदमुचितम्, विनैव परीक्षणं दर्शनम् (Interview) वा विधाय स्वसम्बन्धिने कस्मैचिद् अल्पज्ञाय सचिवस्थानं विश्वासस्थानं वा दातुम्, इत्युच्चैः ते आक्रोशन्।

इति तेषां विरोधमाकर्ण्य न मया जातु युष्माकं प्रत्यक्ष-परीक्षणाय मम विज्ञापने लिखितम्, नापि च प्रोक्तम्। तथापि परोक्षं परीक्षिता मया सर्वेऽपि यूयम्। इदानीमेवाऽहं सोपानपंक्तौ स्थितः अप्रत्यक्षेण सर्वानपि युष्मान् प्रकृति-स्थानपश्यम्। कृता मया सम्यक् परीक्षा युष्माकम्, दत्तं च समुचितः पुनर्निर्णयः। नात्र परिवर्तनस्य कोऽप्यवकाशः। युष्मासु गुणसम्पन्नतमोऽयं देवदत्तो मया समादृतः मम

विश्वासस्थानस्य भाजनम्। स मनसा वचसा कायेन च पवित्रः सत्यवक्ता विधिज्ञो व्यवहारनिपुणः परोपकारप्रियो वीरो मनस्वी च वर्तते। सर्वेषां च भवतां कृते मम गृहे कार्यं नास्तीति क्षमां प्रार्थये, इत्यभिधाय श्रेष्ठी कक्षमविशत्; अन्येऽपि च सर्वे हताशाः स्वस्वगृहाणि प्रतिन्यवर्तन्त।

छात्राः! निभालयध्वम्। लोकेऽस्मिन् न कलानाम्, न विद्यानां नापि च शौर्याणामन्यैः गुणैर्विना समादरो जायते। जना दयादाक्षिण्यचारित्र्यकर्त्तव्यपरायणत्वपरोपकारादीनां गुणानां कलाभिः विद्याभिश्च संमिश्रणं कामयन्ते। अतो युष्माभिः प्रोक्तानां गुणानां संग्रहः कर्त्तव्यः, तेषामभ्यासश्च सततमादरणीयः। उत्कृष्टैरेव गुणैः लोके स्थानलाभो भवति। प्रतिष्ठास्थाने स्थितश्च जनो बहूनि श्रेयांसि साधयितुं पारयतीति समुचितमुच्यते—

गुणेषु यत्नः पुरुषेण कार्यो
न किंचिदप्राप्यतमं गुणानाम्।
गुणप्रकर्षादुडुपेन शम्भोः
अलंघ्यमुल्लंघितमुत्तमाङ्गम् ॥

# गुरुभक्तः कौत्सः

आसीत् पुरा कलिङ्गेषु संवर्धनं नामारण्यम्। तत्र च कृताश्रमः शिष्यैः समेतः चतुर्दशविद्यानां निधानं तपोधनो वरतन्तुर्नाम मुनिरवसत्। तस्य छात्रेषु वरिष्ठबुद्धिः कौत्सो नाम कश्चन शिष्य आसीत्। उपात्तविद्यः सः— 'का दक्षिणा भवते देया' इति सनिर्बन्धं गुरुदेवं प्रार्थयत्। आचार्यस्तु—'तुष्टोऽहं वत्स! तव भक्त्या योग्यतया चेति न मे दक्षिणया प्रयोजनम्' इति प्रत्याचष्टे स्म। शिष्यस्तु पुनरपि कामपि दक्षिणां दातुं निर्बन्धमकरोत्। ततस्तु शिष्यस्य हठेन क्रुद्ध इवाचार्यः 'मया त्वम्—

अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥

पाठितः। इति विद्यानां परिसंख्यया स्वर्णदीनाराणां चतुर्दश कोटीः त्वं दक्षिणायां मह्यं दातुमर्हसीत्यवोचत्।

गुरोः वचनमाकर्ण्य विस्मितः श्रुतधनः स कौत्सः महान्तं तं धनराशिं गुरवे समाहर्तुमचिन्तयत्। स तदानीन्तनस्य नृपालस्य चक्रवर्तिनः रघोः राजधानीमयोध्यां प्रपेदे।

महाराजो रघुश्च तदानीं दशापि दिशो जित्वा नाचिराचिरादेव विश्वजितं समाप्नोत्। स निःशेषं राजकोषं नैजं सर्वस्वं राज्यं चापि यज्ञदक्षिणायां पुरोहितेभ्यो याचकेभ्यश्चायच्छत्। प्रभावमात्रशेषः स राजा मुनिकुमारस्य कौत्सस्य हार्दिकं स्वागतमकरोत्। स मुनये कुशासनं दत्त्वा मृण्मयेन पात्रेण जलमानीय तस्य पादौ प्रक्षालयामास पूजयामास च तपोधनं तं यथाशास्त्रम्।

ततः स राजा कृताञ्जलिः सन्— हे कुशाग्रबुद्धे! मन्त्रद्रष्टॄणां मुनीनां मुख्यस्ते गुरुवर्यः वर्तते कुशली कच्चित्? कायेन वाचा मनसा च सञ्चिते महर्षेस्तस्य त्रिविधे तपसि वासवादिभिः कृतो नास्ति वा कश्चित् विघ्नः? सुतनिर्विशेषं मुनिभिः संवर्धितानामाश्रमपादपानां झञ्झावातादिभिर्नास्ति वा कश्चिदुपप्लवः? ननु सन्ति कुशलिन्यो मुनीनां होमधेनवः? सन्ति कच्चित् नित्यस्नानादिसाधनानि वः तीर्थजलानि स्वच्छानि? सन्ति वा कच्चित् युष्माकं शरीरस्थितिसाधनानि कन्दमूलफलोद्यानानि श्यामाकक्षेत्राणि वाऽविघ्नानि? हे द्विजकुमार! द्वितीयमाश्रमं संक्रमितुं योग्यस्तेऽयं समयः। नन्वनुमतो भवान् प्रसन्नेन गुरुणा गृहस्थाश्रमं प्रवेष्टुम्? पवित्रोऽस्मि जातोऽहमद्य पूज्यस्य भवतः समागमेन प्रसन्नश्चास्मि। तथापि मनो मे तत्रभवतो नियोगं कमपि काम-

यते। आदिशतु भवान् कामपि सेवाम्। गुरोरादेशेन स्वेच्छया वापि मां संभावयितुं वनादायातो भवान् इति वा कथ्यताम् इत्यपृच्छत्।

ततोऽर्घ्यपात्रानुमितव्ययस्य महाराजस्य रघोरुदारां वाणीमाकर्ण्य स्वकार्यसिद्धिं प्रति दुर्बलाशः स वरतन्तुशिष्यो ऽब्रवीत्— हे राजन्! वर्तते सर्वथा कुशलमस्माकम्। कुतो भवादृशे महाराजे शासति प्रजानामशुभम्। 'सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा' इति लोकोक्तेः। हे महाराज! पूज्येषु कुलोचिता भवदीया भक्तिः पूर्वानपि अतिशेते मावत्कान् इति पश्यन्नानन्दनिर्भरोऽस्मि। पुनरपि व्यतीतकालोऽहं धनार्थी भवन्तमभ्युपेतोऽस्मीति मे विषादः। यद्वे दत्तसर्वस्वदक्षिणो रिक्तकोषो भवान्। इति स्वकार्यं वक्तुं लज्जितोऽस्मि। इदानीं मखजमकिञ्चनत्वं बिभ्राणः स्थाने शोभते महाराजः। 'पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः।' अन्यच्च—

> धर्मार्थं क्षीणकोषस्य क्षीणत्वमपि शोभते।
> सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव॥

हे राजन्! अवश्ययाचकोऽपि नाहं रिक्तकोषमिदानीं भवन्तमनुबध्नामि। अन्यस्मात् कस्माच्चिद् वदान्याद् गुरोः दक्षिणार्थं धनं याचितुं यतिष्ये। 'स्वस्त्यस्तु ते कुशलमस्तु'

अनुजानातु भवान् मां गन्तुम्। 'अनन्यगो निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि।' इत्युक्त्वा गन्तुकामं महर्षेः वरतन्तोः शिष्यं तं कौत्सं नृपतिः निषिध्य— हे विद्वन्! 'भवता गुरवे प्रदेयं किं वस्तु कियद्वेति कथयतु भवान्' इत्यपृच्छत्।

ततः स ब्रह्मचारी कौत्सः वर्णाश्रमाणां नियामकाय यज्ञे दत्तसर्वस्वाय तस्मै राज्ञे स्वागमनप्रयोजनं न्यवेदयत्— हे महाराज! समाप्तविद्योऽहं 'का दक्षिणा गुरवे देया' इति स्वाचार्यं प्रार्थयम्। स तु—'भक्तिस्तव दक्षिणायै अलम्' इत्यवादीत्। अहं तु श्रद्धातिरेकेण यथाशक्ति देयमेव किमपि गुरुवराय इति निर्बन्धपरोऽभवम्। तदा तु मम निर्बन्धात् संजातरोष इव गुरुर्दवो मेऽर्थकार्श्यमचिन्तयित्वैव 'वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति' अब्रवीत्।

अहं च, हे राजन्! भवतः सपर्याविधिभाजनमिदं वीक्ष्य प्रभुशब्दशेषं निर्धनम्, गुरवे देयस्याल्पेतरत्वाद् इदानीमुपरोद्धुं नोत्सहे भवन्तम्, इत्यादिशतु भवान् मां गृहं गन्तुम्।

इत्थं च वेदविदांवरस्य तस्य मुनेः वचनमाकर्ण्य पवित्रप्रभावो महाराजो रघुः भूयस्तं प्रावोचत्— हे ब्रह्मन्! 'श्रुतपारदृश्वा कोऽपि गुरुदक्षिणार्थी द्विजो महाराजस्य रघोः सकाशात् मनोरथमनवाप्यैव वदान्यान्तरमगच्छद्' इति मे परी-

वादस्य प्रथमावतारो न भवेत् । 'सम्भावितस्य चाकीर्त्तिः मरणादतिरिच्यते' इति प्रार्थयत् । हे मान्यवर ! भवान् मम यज्ञशालायामस्यां वसन द्वित्राणि दिनानि सोढुमर्हति । यावदहं भवतः प्रयोजनं साधयितुं यत्नं करोमि इति च नतेन शिरसा हस्तौ नियुज्य पुनस्तमन्वबध्नात् ।

ततः प्रसन्नः सोऽग्रजन्मा तथास्तु इति महाराजस्य वचनमभिनन्द्य यज्ञशालामविशत् । भूपतिस्तु स्वकीयेन दानेन रिक्तामिवावेक्ष्य भूमिं गजराजाद् देवानामधिपात् कुबेराद् धनमाहर्तुं चक्रमे ।

ततस्तु सायमेव कृतसज्जो महाराजो रघुः गुरोः वसिष्ठस्य कृतेन वायुरथेन प्रातः कुबेरपुरीं प्रस्थातुकामः शुभे मुहूर्ते एव रथमारुह्याधिशिश्ये । उदन्वदाकाशमहीधरेषु चाप्रतिपिद्धगति आसीत् तस्य विमानमिति मुनेर्नारदात् ज्ञात्वा देवानां निधिपतिः कुबेरो भीतोऽभवत् । स रघोः कोषागारे हिरण्यमयीं वृष्टिमकारयत् । ततश्च प्रातः प्रयाणाभिमुखं महाराजं रघुं कोषाधिकारिणः समेत्य कोषगृहे जातामाकाशाद् हिरण्यमयीं वृष्टिं प्राशंसन् । भूपतिस्तु धनागारं समुपेत्य सुमेरोः खण्डमिव स्थितं भास्वरं तत् सकलं हेमजातं मुनये कौत्साय दिदेश । तदानीं गुरुप्रदेयाधिकनिःस्पृहोऽर्थी मुनिः कौत्सः, अर्थिकामाद् अधिकप्रदो भूपालो रघुश्चेति द्वावपि साकेत-

निवासिनां जनानामभिनन्दनीयौ अभूताम् । प्रसन्नो महर्षिः कौत्सः उष्ट्रवामीशतवाहितार्थं विनयविनम्रं प्रजेश्वरं रघुं करेण स्पृशन्—'हे नृपाल ! वृत्ते स्थितस्य लोकाधिपस्य भूमिः कामदुघा भवेत्, इति नाश्चर्यम् । भवतस्तु महान् प्रभावः स तु देवानपि समाकर्षति । सम्रतापो भवान् दिवमपि दोग्धि कामान् । हे राजन् ! स्वीयपुण्यपुञ्जेन सर्वाणि श्रेयांसि अधिगतानि श्रीमता । इति ममाशिषामवकाशस्तु 'आत्मगुणोपेतं पुत्रं लभतां भवान्' इत्यत्रैवास्ताम् इति मन्ये । इत्याशिषः प्रयुज्य स मुनिः गुरोराश्रमपदं जगाम । राजापि तस्य मुनेः आशिषः जीवलोकः भास्करात् आलोकमिव प्रतापवन्तमजं नाम सुतं लेभे । सर्वाः प्रजाः प्रसन्ना अभवन्, दिवि दुन्दुभयोऽनदन् अवर्षन् च देवाः दिव्यानि पुष्पाणि आकाशात् ।

आदर्शो गुरुभक्तानां कौत्सो विद्यावतां वरः ।
दातॄणां च महाराजो रघुश्चासीन्निदर्शनम् ॥

---

गत १४ वर्षों से प्रकाशित अपने क्षेत्र का अद्वितीय
संस्कृतमासिकपत्र

संस्कृत को सरल, सुलभ, सर्वग्राह्य बनाने के लिए

# बालसंस्कृतम्

—आपके भारतीयत्व का पुष्ट प्रमाण होगा।

—प्रारम्भिक संस्कृत छात्रों की कठिनाइयों को दूर करेगा।

—आपको हठात् संस्कृतानुरागी बनाएगा।

—सभी भारतीय भाषाओं को जोड़ने वाली कड़ी होगा।

—भारतीय संस्कृति और सभ्यता को सामने रखेगा।

—आपके व्यवहार ज्ञान की वृद्धि में सहायक होगा।

—आपको संस्कृत की सरलता और मद्रता का परिचय देगा।

आज ही ग्राहक बनिए ! वार्षिकशुल्क पांच रुपए !

---

प्राप्ति स्थानम्—

बालसंस्कृतं कार्यालयः

आगरा रोड, घाटकोपर, बम्बई-७७

दिल्ली शाखा—

८०, कोटला रोड, नई दिल्ली-१

# अस्माकं प्रकाशनानि

| | | एकस्य प्रतेः मूल्यम् रु०न.पै. |
|---|---|---|
| संस्कृतव्याहारः | भागाः १—५ | ०.७५ |
| सप्त विभक्तयः | | ०.७५ |
| पञ्च सन्धयः | | ०.७५ |
| संस्कृतप्रवेशिका | भागाः १—३ | ०.७५ |
| बालनीतिकथाः | भागाः १—८ | ०.६२ |
| संस्कृतसोपानम् | भागाः १—३ | १.२५ |
| प्रहेलिकाशतकम् | | ०.५० |
| समासाः | | ०.५० |
| संभाषा | भागाः १—५ | ०.६२ |
| संभाषा English | भागाः १—५ | ०.६२ |
| लौकिकन्यायरत्नमञ्जूषा | | २.२५ |
| संस्कृतप्रबन्धचन्द्रिका | भागाः १—३ | १.२५ |
| सुन्दरं संस्कृतम् | भागाः १—३ | ०.७५ |
| भारतीयाः महापुरुषाः | | १.२५ |
| कुमारसंभवम् | ( संक्षिप्तगद्यम् ) | ०.७५ |
| रघुवंशम् | ( संक्षिप्तगद्यम् ) | ०.७५ |
| बालरामायणम् | | ०.७५ |
| लघुनिबन्धावली | | १.०० |
| संस्कृतवर्णमाला | | १.०० |
| कृदन्ताः | | ०.५० |
| शाक्तेयसुभाषितानि | | ०.६२ |

प्राप्ति स्थानम्—

बालसंस्कृतकार्यालयः

आगरा रोड, घाटकोपर, बम्बई-७७

दिल्ली शाखा—

८०, कोटला रोड, नई दिल्ली-१

# बालनीतिकथाः

प्रथमो
भागः

रचयिता
वैद्य. रामस्वरूपशास्त्री

सम्पादकः
नन्दनन्दनसनाढ्यः एम० ए०

बालसंस्कृतम् प्रकाशनम्
आगरा रोड, घाटकोपर, बम्बई-७७

मूल्यं ६३ न. पै.

# कथानां क्रमः


| | | |
|---|---|---|
| १. | भेदस्तत्र विद्यते | १ |
| २. | मूर्खमण्डलम् | २ |
| ३. | शठे शाठ्यं समाचरेत् | ३ |
| ४. | अभयप्रदानम् | ४ |
| ५. | कथमित्थम् | ६ |
| ६. | चिरौति निर्जलो घटः | ९ |
| ७. | अभद्रो वृकः | १० |
| ८. | क्व वसति लक्ष्मीः | १२ |
| ९. | संशयात्मा प्रणश्यति | १६ |
| १०. | मेधावी पुत्रः | १९ |
| ११. | साधूनां दर्शनं पुण्यम् | २३ |
| १२. | दानशौण्डः कर्णः | २७ |



पुस्तकस्यास्य सर्वेऽधिकाराः स्वाधीनाः सन्ति



द्वितीयं मुद्रणम् ] [ १ मई ख्रिष्टाब्दाः १९६२

प्रकाशकः—

वैद्यः-रामस्वरूपशास्त्री

बालसंस्कृतं कार्यालयः, आगरा रोड, घाटकोपर, बम्बई-७७

मुद्रकः—

सार्वदेशिकप्रेस, दरियागंज, दिल्ली-७

# बालनीतिकथाः

## अष्टमो भागः

## भेदस्तत्र न विद्यते

एकदा कश्चित् काष्ठविक्रेता इन्धनम् आनेतुम् वनम् अगच्छत्। स एकस्य वृक्षस्य तले उपविश्य रोदितुम् आरभत। रुदन्तं वीक्ष्य दयालवः वृक्षाः 'किमर्थं रोदिषि' इति तम् अपृच्छन्। सोऽवदत् अहं काष्ठविक्रयेण जीवामि। मम कुठारस्य दण्डो भग्नः। तेन विना इन्धनं छेत्तुं न शक्नोमि, इन्धनस्य विक्रयाभावेन न धनागमः, धनाभावाच्च नान्नम्, अन्नाभावाच्च कुटुम्बम् अहं च बुभुक्षया म्रिये। तेन अहं रोदिमि। ततः सर्वे वृक्षाः सम्भूय 'शिंशपा बीजफला दृढा च' इति विचार्य एकं शुष्कं शिंशपादण्डं तस्मै अदापयन्। शिंशपादण्डोऽपि बहुमतविरोधमशक्नुवन् तूष्णीं स्वीचकार संघस्य आदेशम्।

ततः स काष्ठच्छित् तं दण्डं कुठारे नियोज्य, आम्रान्, जम्बून्, वटान्, बकुलान्, कदम्बान्, निम्बान्, चन्दनानपि च समूलमच्छिनत्। तदा सर्वे वृक्षाः 'अनष्टाः वयम्' इति रोदितुं प्रारभन्त। ततः एकः आम्रवृक्षः अवदत्—'अहो मूर्खा यूयम्' आत्मीयं तिरस्कुर्वन्तः इदानीं पश्यत असमीक्ष्यकृतस्य परिणामं कुलक्षयमिति।

यत उक्तम्—

> यत्रात्मीयो जनो नास्ति भेदस्तत्र न विद्यते।
> कुठारैर्दण्डनिर्मुक्तैर्भिद्यन्ते तरवः कथम्॥

# मूर्खमण्डलम्

एकदा दश ग्रामीणा तीर्थयात्रायै अगच्छन् । नातिदूरं गतानां तेषां मार्गे एका क्षुद्रा नदी उपातिष्ठत । महता परिश्रमेण तां बाहुभ्यां तरन्तस्ते तस्याः परं तीरं प्रापुः ।

तेषु एकः काणः आसीत् । सः 'किं नु सर्वे वयं तीरमनुप्राप्ताः ?' इति पर्यपृच्छत्, अगणयत् च तान् एकैकशः सर्वानपि । परन्तु आत्मानं न गणयामास इति नवैव परिगणितास्तेन । ततः विह्वलः स उच्चैः आक्रोशत्—'अहो ! वयं दश आगताः, इदानीं नवैव शिष्टाः । अवश्यम् अस्माकं मध्यात् कश्चित् नद्यां निमग्नः ।' ततः ते सर्वेऽपि चिन्ताकुलाः अभवन्, अगणयन् च आत्मानं विस्मृत्य विस्मृत्य पुनः पुनः अन्यान् सर्वान् । तदापि नवैव अभवन्, ततः भृशं व्याकुलास्ते नद्यास्तटे महान्तं कोलाहलम् अकुर्वन् ।

एतस्मिन् अन्तरे कश्चित् साधुः तत्र आगत्य तेषां मूर्खचेष्टितानि अवालोकयत्, अहसत् च उच्चैः । ततः ते सर्वे तस्य समीपं गत्वा हासकारणं तम् अपृच्छन् । साधुः प्राह—'अहो ! बालिशाः यूयम्, युष्मासु एकैकः अन्यान् गणयन्नपि आत्मानं न गणयति, इत्ययं व्यामोहः युष्माकम् ।' इति श्रुत्वा ते लज्जिताः अभवन् प्रययुश्च तेषाम् अभिमतां दिशम् । तदा स साधुः इमं श्लोकम् अपठत्—

> दिवान्धाः प्राणिनः केचित् रात्रावन्धाः तथा परे ।
> केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः ॥

# शठे शाठ्यं समाचरेत्

अस्ति भागीरथीतटे सुबुद्धिर्नाम सारसः। तस्य भूरिमायो नाम जम्बुको मित्रमस्ति। बहुधा जम्बुकः सारसं द्रष्टुमायाति। सोऽपि परमेण प्रेम्णा प्रश्रयेण च जम्बुकं मित्रमनामयं पृष्ट्वा मधुरैः सम्भाषणैश्च समादृत्य भोजनपानासनादिकं ददाति।

एवं बहुषु दिनेषु गच्छत्सु एकदा भूरिमायोऽपि सुबुद्धिं मित्रं क्षीरभोजनार्थं स्वं गृहमामन्त्रयति। कपटस्वभावो भूरिमायः क्षीरं निर्माय एकस्मिन् समतले स्थाले परिवेशयति, प्रार्थयते च मित्रं स्वेन सहैव भोक्तुम्। लम्बचञ्चुः सारसः परमेण प्रयत्नेन यावत् कांश्चित् क्षीरबिन्दून् चिनोति, तावत् प्रलम्बजिह्वो जम्बुकः सर्वं क्षीरं लेढि। ततो बुभुक्षित एव सुबुद्धिः क्रोधं संनिरुध्य क्षुधेव गोष्ठीसुखं च प्रदर्श्य गृहं प्रत्यागच्छति।

अथान्यस्मिन् दिवसे सारसोऽपि सरसं क्षीरभोजनं विधाय भूरिमायं तेन सह भोक्तुमभ्यर्थयति, परिवेशयति चैकस्मिन् स्वल्पे लम्बमुखे कलशे पायसम्।

इदानीं भूरिमायोऽपि जम्बुकोऽमाय इव क्षीरं स्वदमानस्य सुबुद्धेर्मुखमवलोकमानस्तिष्ठति पर्यालोचयति च—स्थाने समाचरितं सुबुद्धिना मयि शठे शाठ्यं समाचरता। यथोच्यते—

> कार्पण्यं कृपणे कुर्यात् कुर्यात् दुष्टेषु दुष्टताम्।
> सौजन्यं सुजने कुर्यात् शठे शाठ्यं समाचरेत्॥

# अभयप्रदानम्

कस्यचित् नृपालस्य चतस्रो भार्या अभवन्। ताः पतिव्रता भर्तृभक्ताः चासन्। एकदा तासां सेवया सन्तुष्टो राजा ताभ्यो वरं दातुमैच्छत्। तास्तु—'अन्यदा वयं वरं वरिष्यामः' इत्यवोचन्।

दिनानि व्यतीतानि, मासाः प्रयाताः, वर्षाणि समतिक्रान्तानि। ततो राजपुरुषैः कोऽपि अपराधी निगृहीतः। ते तं व्यवहारार्थं राज्ञः समक्षमानीतवन्तः। राजा तस्य प्राणदण्डमादिशत्। राजपत्न्यः तस्य प्राणदण्डस्य वृत्तान्तमशृण्वन्। दयावत्यः ता अचिन्तयन्—'अहो! महद् दुःखमापतितमस्य वराकस्य। अहो! प्राणदण्डः! अस्यान्तः समायातः। श्वो मरिष्यति एषः। कथं नास्मिन् दयनीये जने कृपा करणीया' इति।

'अहं तावत् नृपालाद् वरं वरीत्वा दापयित्वा चास्मै एकस्य दिनस्य जीवनम्, एनं सुखिनं करिष्यामि' इति प्रथमा राज्ञी व्यजिज्ञपत्। ततः सा राजानमुपेत्य—'महाराज! मम वरदानेन अस्मै अपराधिने एकस्य दिनस्य जीवनं दत्त्वा अनुगृह्यताम्। अन्यच्चाहमस्य एकस्मिन् दिने आतिथ्यमपि कर्तुं कामये, इत्यपि अनुमोद्य स्वीक्रियताम्' इति प्राह।

नृपालोऽपि राज्ञ्याः प्रार्थनामपूपुरत्। सा अपराधिनं तं राजप्रासादं आनिनाय। तत्र च सा बहूनि विविधानि स्वादूनि

भोजनानि तस्मै दापयामास, विपुलां शय्याम्, उपधानं कोमलमास्तरणं स्वच्छमाच्छादनं विविधानि परिधानानि भूषणानि च। स तु 'श्वो मरिष्यामि' इति चिन्तातुरो न किमपि कामयते स्म।

अन्यस्मिन् दिने द्वितीया राजपत्नी तस्मै अपराधिने आतिथ्यं दातुं नृपालाद् वरं वरयति स्म। सापि स्वादूनि विविधानि मिष्टान्नानि वस्त्राणि भूषणानि च तस्मै उपानयत्। परन्तु मरणचिन्तातुराय तस्मै न किमपि रोचते स्म।

तृतीये दिने तृतीया राज्ञी तस्य सर्वविधमातिथ्यं कृतवती। किन्तु मृत्योः भीताय तस्मै न किमपि रुरुचे।

ततश्चतुर्थे दिने चतुर्थी राज्ञी तस्यैव अपराधिनः आतिथ्यं कर्तुमचिन्तयत्। सा तु विविधानि भोज्यवस्तूनि विहाय अङ्गार-दग्धां रोटिकां रूक्षं शाकं च तस्मै दत्तवती, अभयं च प्राणदण्डात्। तदानीं वीतभयः स परमया रुच्या तया दत्तं भोजनमकरोत्। कृतभोजनः स राजपत्न्या प्रदत्तानि सुन्दराणि वसनानि भूषणानि च पर्यधरत्, अन्वभवच्च सुखेन निद्राम्। इदानीं नृत्यगीतादिकं च सर्वमपि तस्मै रुरुचे।

'का नाम अस्मासु तस्यापराधिनोऽधिकां सेवां कृतवती' इति राज्ञोऽवरोधेषु मिथो विवादः उदभवत्।

ततस्ताः राजानमुपेत्य न्यायं याचयांचक्रुः। राजापि तमेवापराधिनमाहूय राज्ञीभिः तस्मै दत्तस्य परितोषस्य विषये पर्यपृच्छत्। स प्राह—राजन्! यावन्मम मृत्योः भयमासीत्,

न तावन्मे भोजनं पानं वस्त्रमाभूषणं नृत्यं गानं सुवर्णं वापि रोचते स्म। या तु चतुर्थी राज्ञी मम मृत्युभयं दूरीकृत्य अभयदानं दत्तवती, सा चिरं सुखेन जीव्यात्। स्वस्त्यस्तु तस्यै। तस्या एव अङ्गारदग्धा रोटिका शुष्कं शाकं च वीतभयस्य मम कृतेऽमृतमभवत्। तस्या एव दानेनाहं तुष्टोऽस्मि जीवामि च। अभयप्रदानं नाम सर्वेभ्यो दानेभ्यो वरमिति मन्ये। अत एव कथयन्ति कवयः—

> न गोप्रदानं न महीप्रदानं न चान्नदानं न सुवर्णदानम्।
> यथा वदन्तीह बुधाः प्रधानं सर्वेषु दानेष्वभयप्रदानम्॥

---

## कथमित्थम्

पुरा वाराणस्यां देवशर्मा नाम कश्चित् पण्डितः आसीत्। स बहूनां विषयाणाम् अध्यापकः अभवत्। तस्य गृहे बहवः छात्राः पठितुं समागच्छन्। तस्य गङ्गादत्तोऽपि कोऽपि जड-बुद्धिः शिष्यः अभवत्। स निरन्तरं परमया श्रद्धया गुरुगृहम् असेवत। सेवया सन्तुष्टः गुरुः अपि महता प्रयत्नेन तं शास्त्राणि पाठयितुं प्रायतत। किन्तु निर्बुद्धिः गङ्गादत्तस्तु न किमपि पठितुमपारयत्। तस्य सहपाठिनौ मुकुन्दमाधवौ तु [illegible] अवर्तताम्। अचिरादेव च तौ [illegible] अभवताम्। एकदा यदा देवशर्मा तान् पाठयन् आसीत्, तदैव गङ्गादत्तः केनापि

कार्येण गुरुशिष्ययोर्मध्यात् निरगच्छत् । एतेन क्रुद्धः गुरुः अवादीत्—रे ! 'कथम्' ।

एतत् श्रुत्वा गङ्गादत्तस्य मुखं पश्यन्तौ मुकुन्दमाधवौ अहसताम् । स तु मूर्ख एव आसीत्, 'कथम्' इत्यस्यार्थम् अविज्ञाय, विरुद्धमर्थमादाय अचिन्तयत् । अहो ! अस्य गुरोः प्राबल्यम् ! एष मां 'कथम्' इति पदेन संबोधयते । नूनमेष मां कथमिति पदेन गालिं ददाति । इति विचार्य संजातक्रोधः स वैरसाधनं कर्तुं मनो दधे, प्रारभत च उत्फुल्लगल्लः सन् दुर्वचनानि वक्तुम्—अहो रे ! पुस्तककीटपतङ्गभृङ्गसदृश !

त्वं कथं, जनयत्री ते सा कथं, ते पिता कथम् ।
कुटुम्बं च कथं तेऽस्तु कथं नाहं कथंचन ॥

इति श्रुत्वा ते सर्वे उच्चैः अहसन् । तद्दिनादेव सर्वे बालकाः तं गंगादत्तम् 'कथम्' इति नाम्ना दुन्वन्ति । तं वीक्ष्य बालकाः 'कथम्' इति प्रोच्चैः उच्चार्य पलायन्ते । स तान् हन्तुम् अनुधावति । एवं सर्वोऽपि तं कथमिति जल्पेन दुनोति स्म । एकदा देवशर्मा कलशमेकं दत्त्वा गंगादत्तमवादीत्—गच्छ भोः ! गंगादत्त ! पूजार्थं जलमानय । पश्य, इमं घटं शोधयित्वा जलेन च पूरयित्वा आकण्ठं शिरसि निधाय शीघ्रमेव निवर्तस्व इति । स कलशमादाय गंगातटम् अगच्छत् । तत्र स घटं शोधयित्वा जलेन च आकण्ठं पूरयति । ततः 'आकण्ठं शिरसि निधाय' इत्यस्य वाक्यार्थसंगतिं चिन्तयति । ततः घटस्य कण्ठं गृहीत्वा विपर्यासेन तं शिरसि दधाति । विपर्यस्तस्य घटस्य जलेन गंगादत्तस्य आचूलमूलं स्नानं जातम् । पौषस्य मास आसीत् । स शीतेन कम्पमानः अचिन्तयत्—

'नूनमनेन गुरुणा वञ्चितोऽस्मि। किं करोमि, क्व गच्छामि। तेनाहं विपर्यस्तेन घटेन जलमानेतुं प्रोक्तः। अस्तु द्रक्ष्यामि, करिष्यामि च वैरनिर्यातनम्।'

इति विचिन्त्य पुनरपि स गङ्गातटमगच्छत्। यावत् स जलेन घटं पूरयित्वा गृहं प्रस्थितः तावत्तेन स्नातुमागतौ मुकुन्दमाधवौ दृष्टौ। तौ अवादिष्टाम्—'कुशलं भोः! कथम्!' इति श्रुत्वा गंगादत्तः रोषेण अकथयत्—रे दुष्टौ! युवामपि एवं वदथः। अद्य युवाम् अत्रैव गंगायां विनिमज्जयामि। इति वदन् क्रोधान्धः स स्नान्तौ तौ ग्रहीतुं गंभीरां गंगां प्राविशत्। मुकुन्दमाधवौ तीर्त्वा दूरमगच्छताम् गङ्गादत्तस्तु तरीतुं नाजानात्, इति जले निमंक्तुं लग्नः। माधवः निमज्जन्तं तं दयया जलाद् बहिर्निरसारयत्। ततः स जलकुम्भमादाय तूष्णीं गृहं प्रातिष्ठत। स गृहं प्रविश्य—'कुत्र रक्षामि जलम्, कुत्र रक्षामि जलम्' इति वारं वारम् अपृच्छत्। देवशर्मा पूजातत्परः आसीत्। स अंगुल्या 'तत्र रक्ष' इति निरदिशत्। स तु संकेतं न ज्ञात्वा पुनरपि तथैवाकरोत्। ततः सः तं तर्जयन् 'रक्ष मम शिरसि' इति क्रुधा अवादीत्। सोऽपि कलशं तस्य शिरसि निरस्रावयत्। देवशर्मा तेन जलेन क्लिन्नवस्त्रोऽभवत्। तस्य पूजाभंगोऽजायत। सर्वाणि पूजोपकरणानि विपर्यासं प्राप्नुवन्। अत उक्तम्—

कथमित्थं न मूढेषु याचनीयं कदाचन।
मूर्खे छन्दानुरोधेन साधयेदिति मे मतम्॥

# विरौति निर्जलो घटः

कश्चित् पुरुषो देशाटनं कर्तुमगच्छत्। स बहुषु देशेषु चिरं भ्रान्त्वा स्वं नगरं प्रत्याजगाम। स देशान्तरेषु यानि यानि कौतुकानि ददर्श तानि सर्वाणि मित्रेभ्यः परिचितेभ्यश्च जनेभ्योऽयथातथं महता गौरवेण वर्णयामास। कथाप्रसङ्गेनाऽयथार्थभाषी सः— 'अहमलकापुरीमगच्छम्, तत्रत्या जनाः पञ्च हस्तान् उत्पतन्ति स्म। परन्तु यदा मया सह ते पणं चक्रुः, तदा न कोऽपि तत्राहमिवोदपतत्' इति सुदूरं जजल्प, उपस्थिता जनास्तस्य वचनं यथार्थं न मेनिरे। तदा स तान् प्रत्याययितुं बहून् शपथान् अकरोत्।

अस्मिन्नन्तरे तेषामेकोऽवादीत्— 'आर्य! किमिति बहून् शपथान् कृत्वा कृच्छ्रे आत्मानं पातयसि। प्रकोष्ठे धृतस्य वलयस्य ज्ञाने किमादर्शस्य प्रयोजनम्, किं न सर्वेभ्योऽधुना प्रत्यक्षं दर्शयसि? अलकापुरीस्थितमात्मानं भावय। यथा त्वं तत्रोदपतस्तथैव भूयोऽप्यत्र किन्नोत्पतसि?' ततो विकत्थनः स लघुशंकाच्छलेन तत उत्थाय स्वगेहमविशत्। न स पुनर्जनेभ्यो मुखमदर्शयत्।

ये हि निर्गुणा जनाः स्वयमेव व्यर्थं विकत्थयन्ति, ते लोकेषु तिरस्कारं लभन्ते। न तेषु कोऽपि श्रद्धाति। अलीकयात्मप्रशंसया तेषां लघुता भवति। गुणवन्तस्तु न वर्णिता अपि जनेषु ख्यातिं धनं मानं च लभन्ते। अत एवोच्यते—

> विकत्थन्ते जना मूर्खा गर्जन्ति निर्जला घनाः।
> निःसारा वाद्यते भेरी विरौति निर्जलो घटः॥

# अभद्रो वृकः

एकदा कश्चिद् वृकः जलं पातुं कस्यचित् सरोवरस्य तटमगच्छत्। जलाशये तस्मिन् स जले विहरन्तं कंचन राजहंसमपश्यत्। पानीयं पीत्वा स वृकः तटस्थस्य शिंशपापादपस्य शीतलां छायामुपविश्य सौख्येन सरसि विहरमाणस्य खगस्य लीलाविनोदान् अपश्यत्। तदा स हंसः तटमुपेत्य तं परिचयमपृच्छत्।

ततः स वृकः सर्वं स्वकीयं नामग्रामादिकं परिचयपर्याप्तं वचनमभिधाय स्वस्य पितुः गुणान् गातुं प्रारभत।

वृकः—जानाति किं भोः! राजहंस!—भवान् माम्। अहं महतः शूरस्य पुत्रोऽस्मि। मामको जनकः स्वस्य वीरोचिते जीवने वनेचराणां जीवानां पञ्चशतीं विजित्य व्यापादयामास। न कदापि कोऽपि वराहोऽपि तं जेतुमपारयत्। शतशः वृकेषु एक एवासीत् मम पिता विक्रान्तो वीरो धीरश्च। 'शतेषु जायते शूरः' इति लोकोक्तेः। तस्य शत्रवः तस्माद् भीता अभवन्, एतादृग् वीरो न भूतो न भविष्यतीति मम मातुलोऽधुनापि कथयते।

इति श्रुत्वा नीरक्षीरविवेकी हंसः अवादीत्—हे वीरपुत्र! तव पित्रा हतानां तेषां वीराणां नामानि तु त्वया संस्मृतानि स्युः इति मन्ये। तानि त्वमिदानीं परिगणयितुमर्हसि। अहमपि तानि श्रोतुकामोऽस्मि।

वृकः—तेषां सर्वेषां नामानि तु नाहमिदानीं संस्मरामि, तथापि जात्या जानामि तान्। तेषु शतमेकं मृगाः, शतद्वयम् अजा एडकाशावकाश्च, शतद्वयं च शशका आसन्।

हंसः—अहो! अतिदूरं विक्रान्तं तव जनकेन मेषशावकेषु शशकेषु चेति मन्ये। तर्हि विपुलकीर्तेः वृककुलकमलभानोः धन्यजन्मनोऽतिशूरस्य तस्य कथमवसानमिति मे वर्तते कौतूहलम्।

वृकः— 'न विधिः कस्यापि उत्कर्षं सहते' इति जानात्येव भवान्। येन केनापि च्छलेन स मृत्युमुपस्थापयति सज्जनानामपि, कृतविद्यानाम्, शूराणाम्, धनिनाम्, राज्ञां महात्मनामपि च जीवितम्। एकदा कश्चिद् दुष्टतमः सिंहः वने विचरन्तं तम् आचक्राम विददार च स क्षणेन महावीरं मम तातम्।

'तर्हि स शूरो नासीत्' इति राजहंसः सस्मितमवादीत्॥ स तु क्रूरः कातरो वा भवेद्। शूरस्तु पुनः समानबलैः स्वस्माद् अधिकबलैः वा युद्ध्यति। शूरस्य सिंहस्य साक्षात्कारः तव पितुः जीवने सकृदेव बभूव, तेन सह युद्धे किं फलितमिति तु स्वमुखादेव व्याहरसि त्वम्। इति निशम्य दम्भी स वृकः लज्जयाऽवनतमुखः तस्मात् तडागतीरात् हिमालयतटात् भारतीयं सैनिकं वीक्ष्य चीनीव तूष्णीम् अपासरत्।

> एवमात्मस्तुतिं क्रूराः व्याचक्षन्ते पदे पदे।
> गुणिनः सज्जनास्तांस्तान् वर्जयन्ति प्रयत्नतः॥

# क्व वसति लक्ष्मीः

एकदा विबुधेश्वरः पाकशासनः तत्त्वज्ञानजिज्ञासया दैत्यानां राजानं वैरोचनिं बलिं द्रष्टुं पातालमगच्छत्। तदानीं स विष्णवे वामनाय दत्तसर्वस्वोऽपि अधमर्णतां भजमानो लज्जया रासभरूपं विधाय क्वापि रहसि दिनानि अतिवाहयन्नासीत्। अमरेश्वरो महता कष्टेन तमन्विष्य प्राणमत् प्रार्थयच्चोपदेष्टुमध्यात्मज्ञानं राजनीतिं च। स तस्मै अध्यात्मज्ञानमुपदिश्य राजनीतिं चापि संक्षेपेण अवर्णयत्। स कालस्य महिमानमपि तं कथयामास। देवराजोऽपि प्रियशिष्य इव बहून् प्रश्नान् अपृच्छत् दैत्यराजम्। एवं तयोः संलपतोः प्रहरयुगलमत्यगच्छत्।

एतस्मिन्नन्तरे दानवराजस्य बलेः शरीरात् काचिद् दिव्या स्त्रीप्रभा प्रादुरभवत्। इन्द्रस्तां साश्चर्यमपश्यत्। सा च समुपेत्य देवराजस्यान्तिकेऽतिष्ठत्। तां दृष्ट्वा पुरन्दरो दैत्यपतिमपृच्छत्— हे दानवराज! केयं पुरन्ध्री भवतः शरीराद् आविर्भूय ममाग्रे विराजते? कैषा सुन्दरी? दैवी दानवी मानुषी वेति?

तदा बलिराजोऽवादीत्— 'देवेन्द्र! नेयं दैवी दानवी मानुषी चापि वामा। केयं किं चास्याः अभिप्रेतमिति न भवानेव प्रष्टुमर्हतीमाम्। तदा वासवस्तामभ्यर्थयत्— 'देवि! नमस्तुभ्यम्। काऽसि त्वम्, कस्य कलत्रम्, किमर्थं चासुरराजं विहाय मामुपयासीति कथय?

ततः सा तेजोमयी देवता प्रोवाच— 'देवेश ! न मामयं दैत्यराजो जानाति नापि च त्वं देवराजः। अन्येऽपि देवाः दानवाः मानुषा वापि न जानन्ति माम्। तथापि विद्वांसो मां लक्ष्मीं पद्मां कमलां श्रियं हरिप्रियामिन्दिरां लोकमातरं रमां वा कथयन्ति।

इन्द्रः—हे लोकमातः ! चिरं भवती दैत्यराजमेनमनुगृह्य राक्षसानां भवनानि अलमकरोत्। केन दोषेणेदानीं दैत्यान् त्यजसि ? केन वा गुणेन च मामनुगृह्णासि ? इति कथयतु भवती, यदि नास्ति रहस्यम्।

लक्ष्मीः—देवराज ! मुधा मां लोकाश्चञ्चलां कथयन्ति। नाहं चपलाऽस्मि। न च मां कोऽपि स्थानान्तरं नेतुं प्रभुः। कालस्य प्रभावादेवाहमेकं स्थानं विहायापरं गच्छामि। नात्र बलेः दोषः, न चापि कस्यापि परस्यापि।

इन्द्रः—देवि ! कथमिदानीं भवती दैत्यानां गृहेषु स्थातुं न कामयसे ?

लक्ष्मीः—हे देवराज ! यत्र सत्यं दया दमः क्षमा दानं पराक्रमः धर्मश्च भवन्ति, ब्राह्मणपूजा गो-हितं च, तत्राहं तिष्ठामि। प्राग् दैत्याः प्रोक्तगुणेषु रताः, गोब्राह्मणरक्षका आसन्। इदानीं ते विपरीतबुद्धयः सन्ति। धर्ममर्यादां विहाय ते स्वच्छन्दचारिणः सन्ति। प्राक् ते तपश्चरन्ति स्म। रात्रौ दधीनि सक्तून् मांसं वा न भक्षयन्ति स्म। निशायां

प्रहरद्वयमेव निद्रान्ति स्म। दिवा न शेरते स्म ते। न प्रातः निद्रान्ति स्म। दीनेषु वृद्धेषु दुर्बलेषु रोगिषु च दयन्ति स्म। भयार्त्तानां पीडितानां चिन्ताकुलानां नष्टसर्वस्वानां च साहाय्यं कुर्वन्ति स्म। तदा ते कार्यकालेषु समवेता अभवन्। गुरुजनेषु श्रद्धालवः अभवन्। सर्वभूतानि चात्मवत् पश्यन्ति स्म। परेभ्यो दत्त्वा खादन्ति स्म। तदा तेषु उद्यमः साहसं धैर्यमुत्साहोऽगर्वश्चातुर्यं सारल्यं सौहार्दं पवित्रता प्रिया वाणी चासन्। तेषु द्वेषः आलस्यं क्रोधो दोषदृष्टिरसंतोषोऽविवेकः कामश्च नाभवन्।

इदानीं तु ते सर्वथा विरुद्धाचरणा एव सन्ति। न ते धर्ममनुतिष्ठन्ति कामक्रोधलोभादीनां वशे तिष्ठन्ति। न ते वृद्धानामादरं कुर्वन्ति, अपि तु उपहसन्ति तान्। नापि ते समागतेषु गुरुषु स्वासनाद् उत्तिष्ठन्ति। नेदानीं तेषां भार्याः भर्तुरनुसरणं कुर्वन्ति। पुत्रा अपि पितुरादेशं न पालयन्ति। न ते पित्रोः आचार्याणां गुरूणामतिथीनाम् आदरं कुर्वन्ति। न ते सम्यक् पालयन्ति पुत्रान्। न तेषां गृहे गावः सन्ति। न ते पवित्रं भोजनं कुर्वन्ति। बालकेभ्योऽदत्त्वैव मधुराणि भुञ्जन्ति ते। न ते पालितेभ्यः पशुभ्यः पर्याप्तं पानीयं घासं वा ददति। ते गृहे कलहं कुर्वन्ति दूषितास्तेषां स्त्रियः। ते वर्णसंकराः सन्ति। ते विद्वन्सु मूर्खेषु च सन्ति समानादराः। ते स्वदत्तामन्यदत्तां वा ब्राह्मणानां जीविकामाददति। न ते गुरूनुपासते। स्त्रीषु प्रसक्ताः सन्ति। तेषां पत्न्यश्च नामग्राहं संबोधयन्ति स्वपतीन्। ते कृतघ्नाः नास्तिकाः पापाचाराश्च सन्ति।

हे देवराज ! एभिरेव दोषैः नाहमेतेषां गृहेषु निवासं कामये । देवा इदानीं धर्माचरणाः सन्ति । ते दोषैः रहिताः सन्ति । त्वं देवानां राजाऽसि । शुभाचरणोऽसि । अत एवाहं त्वामुपयामि । यत्राहं तिष्ठामि तत्रैव—

महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ।
मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव ॥ इति नव निधयः,
अणिमा महिमा चैव गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्ट सिद्धयः ॥

च स्थास्यन्ति ।

इन्द्रो लक्ष्मीमभ्यनन्दयत् । सर्वे देवा आगत्य तामवन्दन्त, पूजयन्ति स्म च ताम् । ततस्ते सुरलोकमगच्छन् । लक्ष्मीरपि देवपुरीममरावतीं समुपेत्य नन्दने वने व्यहरत् । देवर्षि-र्नारदो देवसभायां लक्ष्मीदेव्याः स्तोत्रमपाठीत् । सर्वे देवाः हरिप्रियायाः स्वागतं व्याहरन् । ते दिव्यानि वाद्यानि अवादयन्, पुष्पाणि चावर्षन्नाकाशात् । सुखमयं चाभवत् विश्वमखिलम् । इदं च श्रूयते स्म तदानीं नभस्तलात्—

उद्यमो धैर्यमुत्साहो दया भूतेषु चार्जवम् ।
गुरूणां चादरो यत्र तत्र नित्यं वसाम्यहम् ॥

---

# संशयात्मा प्रणश्यति

आसीद् धारायां विष्णुदासो नाम महाधनो वणिक्। स परमः वैष्णवः आसीत्। स नित्यं गाः ब्राह्मणान् साधून् च अपूजयत्। स भगवतः स्मरणे भजने च कालमनयत्। विष्णोः मन्दिरमिव शुशुभे तस्य गृहम्। द्वाराणि भित्तयश्च विष्णोः नामभिरङ्किता आसन्। यत्र तत्र वृन्दावृन्दानि शुशुभिरे। प्रातः सायं च तौ वैष्णवदम्पती परमया भक्त्या विष्णोः विग्रहमार्चताम्। नागरिकाः तस्य गृहे दर्शने कीर्तने च सम्मिलिता अभूवन्। विविधानि मिष्टान्नानि पक्वान्नानि फलानि गव्यानि च स नित्यं भगवतो राजभोगाय अकारयत्। दूरदूराद् वैष्णवाः साधवो ब्राह्मणाश्च तस्य मन्दिरमागत्य आतिथ्यं लेभिरे। स सदैव पञ्च साधून् वैष्णवान् ब्राह्मणान् वा भोजयित्वैव भोजनं करोति स्म। अतिथिभोजनानन्तरमेव तस्य कुटुम्बिनो भोजनमकुर्वन्। न कोऽपि अन्नादो बालोऽपि तस्य गृहे प्राग् ब्राह्मणभोजनादन्नमगृह्णात्।

एकस्मिन् दिने संजातायामपि भोजनवेलायां न कोऽपि ब्राह्मणो वैष्णवः साधुरतिथिर्वा समागच्छत्। बालाः तस्य पुत्राः क्षुधिताः सन्तः 'भोक्तुं देहि देहि' इति व्यलपन्। श्रेष्ठी चातिथीनां मार्गणाय स्वस्य भृत्यान् आदिशत्। ते तु इतस्ततो धावितुं लग्नाः, तथापि न कोऽप्यतिथिस्तैरासादितः। बालानां पुत्राणां भोजनार्थं रोदनेन दूनमनाः सोऽचिन्तयत्—अहो! एतावती अतिवेला संजाता, न कोऽपि भोजनार्थी साधुरायातः, तर्हि

शर्कराया एव साधून् कारयित्वा तेभ्यो भोजनं समर्प्य पुत्रेभ्यो ददामि। इति विचार्य यावत् स शार्करान साधून् निर्माय तेभ्यः भोजनमर्पितुं सज्जामकरोत्, तावत् तस्य भृत्यः पञ्च साधून् आनयत्। तान् दृष्ट्वा स श्रेष्ठी परमां मुदं लेभे। स तान् चतुः शालायामासनेषूपवेश्य भोजनसज्जायै महानसमविशत्। तस्य पुत्रास्तु साधून् दृष्ट्वा 'एतेषां भोजनान्तरमस्मभ्यं भोक्तुं दास्यते' इति ज्ञात्वा बुभुक्षितास्ते उच्चैराक्रन्दनं चक्रुः। तद् वीक्ष्य अतिथि-सम्मानसज्जायां प्रसक्तः श्रेष्ठी 'यद्यतिशयं बुभुक्षिता यूयम्, तर्हि तानेव तावत् शर्करामयान् खादत साधून्' इत्यवादीत्।

इति श्रुत्वा ते सर्वेऽपि बाला अतिशयं प्रसन्नाः अभवन्। तदा ते 'कः कति साधून् खादेत्' इत्यर्थे द्वन्द्वमकार्षुः। अहं द्वौ साधू खादिष्यामि, इति द्वितीयोऽवदत्, तृतीयश्च—अहं पञ्चापि साधून् खादिष्यामि, इत्यवादीत्।

इत्थं चान्तर्गृहात् परस्परं कलहायमानानां तेषां श्रेष्ठि-कुमाराणां वचनानि बहिः स्थिताः ते साधवः श्रुत्वा—अहो! भयस्थानमिदम्। अवश्यमयं धर्मध्वजी श्रेष्ठिमन्यः नः खलीकर्त्तु-मुपक्रमते। एते राक्षसाः भूताः, वेतालाः वा साधून् खादिष्यामः, इति मिथः कलहं कुर्वाणा अस्मिन् मन्दिरे सन्ति। असंशयं मृत्यु-मुखे प्रविष्टा वयम्। देवो रक्षतु। इतः पलाय्य प्राणा रक्षणीयाः, इति भीतास्ते पलायितुं प्रवृत्ताः।

एतस्मिन्नन्तरे श्रेष्ठी भोजनं परिवेश्य साधून् भोक्तुमानेतुं द्वारदेशमगच्छत्। स तान् चतुःशालायां न वीक्ष्य चकितश्चितः इतः ततोऽपश्यत्। सुदूरं मार्गे धावतस्तान् परावर्त्तितुं 'तिष्ठत

तिष्ठत' इत्याह्वयत्। पश्चाद्धावन्तं श्रेष्ठिनं दृष्ट्वा साधूनां तेषां संदेहः परमां दृढतामगच्छत्। ते वेगेन धावितुं लग्नाः, श्रेष्ठी चापि रभसा तानन्वगच्छत्।

ततस्तेषां पृष्ठतो धावन्तं श्रेष्ठिनं दृष्ट्वा लोकाः अचिन्तयन्, 'अवश्यमेतैः साधुवेशधरैश्चौरैः श्रेष्ठिनो रत्नानि चोरितानि, इति स ताननुधावति।' इति मत्वा ते तान् गृहीत्वा दण्डैर्मुष्टिभिः लत्ताभिश्च प्रजह्रुः।

अस्मिन्नन्तरे श्रेष्ठी चापि धावन् घटनास्थलं प्राप, 'भोः! मा हत वराकान् साधून्, नेमे चौराः सन्ति' इत्युवाच च। ते तु—अहो! आश्चर्यम्, भवानेव 'धरत धरत' इति चीत्करोति, स्वयमेव च 'मा हत वराकान् साधून्' इति च कथयतीति सकोपमूचुः। तदा श्रेष्ठी तान् सान्त्वयन् उवाच—सज्जनाः! अहं तु 'तिष्ठत तिष्ठत' इत्येवमाकारयम्, न तु 'धरत प्रहरत' इति। तदा सः—'भोः! महात्मानः केन हेतुना मामनापृच्छ्यैव भवन्तो मम द्वारात् प्रासर्पन्? इति तान् साधून् अपृच्छत्। तेऽपि तेषां मनःसु संजातं संशयं तस्मै सकलं न्यवेदयन्। तेषां कल्पनां श्रुत्वा स उच्चैः जहास, व्याचख्यौ च शर्करामयानां तेषां साधूनां वृत्तान्तम्, तदर्थं कलहं च स्वपुत्राणाम्। तदा सर्वे ते 'आहारस्थाने प्रहाराः संशयात्मनाम्' इति साट्टहासं जहसुः। श्रेष्ठी च तान् साधून् सादरं गृहे नीत्वा भोजयामास, वस्त्रपुस्तकादिदानेन च तोषयित्वा स्वापराधं क्षमयामास। तेऽपि नचिरं विश्रम्य तीर्थमार्गेण प्रतस्थिरे। तदा स श्रेष्ठी पद्यमिदमपाठीत्—

सुधीः शंकासहस्राणि समाधत्ते न मुह्यति।
मूर्खो मूर्च्छति संदेहे संदेहात्मा प्रणश्यति॥

# मेधावी पुत्रः

पुरा गौतमस्य मुनेः मेधावी नाम पुत्रः आसीत्। स जन्मनैव सुबुद्धिमान ज्ञानवान् मोक्षधर्मविचक्षणश्चाभवत् । तस्य पिता गौतमः सदैव स्वाध्यायनिरतो देवपूजापरायणश्चासीत् । वृद्धोऽपि स मोक्षाप्तये कमपि प्रयत्नं नाकरोत्। एकदा स मेधावी स्वपितरमवादीत्—हे तात ! संसारेऽस्मिन् मानुषाणामायुः तीव्रगत्या गच्छतीति पश्यामि, तथापि, कस्य धर्मस्याचरणं कुर्याम्, येन श्रेयो मे भवेद्, इति न जानामि । कृपया देहि मे कल्याणोपदेशम् ।

पिता उवाच—हे पुत्र ! लोकेऽस्मिन् धर्मार्थकाममोक्षाः सन्ति चत्वारः पदार्थाः मानुषैः साध्याः । तान् लब्ध्वा जनाः आनन्दं विन्दन्ति । तथाहि—आयुषः प्रथमे पादे ब्रह्मचारी भूत्वा वेदान् शास्त्राणि विद्याः कलाः चाधीयीत । ततश्च लब्धसमावर्तनः गृहस्थाश्रमे विशेत् । तत्र च कृतदारपरिग्रहः पितॄणामुद्धाराय सदृशान् पुत्रान् इच्छेत्। तत्र देवताः अतिथीन् ब्राह्मणान् च पूजयेत्। विधिपूर्वकं यज्ञकर्माणि चानुतिष्ठेत्। स अग्निहोत्री भवेत् । पुनश्च वानप्रस्थाश्रमे प्रविश्य मुनिर्भूत्वा मोक्षार्थान् प्रयत्नान् कुर्यात् ।

इदं च पितुः वचनं श्रुत्वा पुत्रोऽवादीत्—हे तात ! यत्र लोके धारासारं गच्छन्त्यायुः। दिनानि पुनर्न प्रयान्ति। मासपक्ष गच्छन्ति विनश्यन्ति च। कामक्रोधलोभमदमोहाः प्रवर्धन्ते। जीवाः जीर्यन्ति म्रियन्ते च घरो घरो। हे पितः ! इत्थंभूते

भवेऽस्मिन् भवान् धीर इव 'मुनिर्भूत्वा धर्ममाचरेत्' इति मामुपदिशति। लोकेऽस्मिन् 'न कमपि क्षणमपि प्रतीक्षते मृत्युः' इति पश्यामि। तत्कथमहं ज्ञानस्य कवचेनापिहितः धर्मानुष्ठानाय दीर्घां प्रतीक्षां करोमि। इह हि—

पुष्पाणीव विचिन्वन्तमन्यत्र गतमानसम्।
अनवाप्तेषु कामेषु मृत्युरभ्येति मानवम्॥
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे च पराह्णिकम्।
नहि प्रतीक्षते मृत्युः कृतं वाऽस्य न वा कृतम्॥

तस्मात् हे तात! यद्यत् श्रेयस्करम्, तत्तद् अद्यैव भवता कर्त्तव्यम्। इदानीं भवान् वृद्धः, न जाने कदा मृत्युः समापतेत्। जीवनमिह क्षणभङ्गुरमिति, अहमपि युवैव धर्मशीलो भवितुमिच्छामि। न जाने कदाऽकृतकार्यमेव मामपि मृत्युः समाकर्षेत्।

कृतधर्माचरणो जनो जगतीह प्रीतिमानन्दं सुखं च लभते, परलोके चाक्षय्यं सुखं चानुभवति। यश्च मोहेन सर्वमायुः पुत्रदारार्थं प्रयतते, कार्यमकार्यं वा कृत्वा धनमानीय कुटुम्बस्य सन्तोषाय प्रधावते, तं नरपशुमकस्मात् मृत्युरागत्य सुप्तं व्याघ्रं नदीरय इव समाक्रम्य मारयति।

इदं कृतमिदं कार्यमिदमन्यत् कृताकृतम्।
एवमीहासमायुक्तं मृत्युरादाय गच्छति॥
कृतानां फलमप्राप्तं कार्याणां कर्मसङ्गिनाम्।
क्षेत्रापणगृहासक्तं मृत्युरादाय गच्छति॥
दुर्बलं बलवन्तं च प्राज्ञं शूरं जडं कविम्।
अप्राप्तसर्वकामार्थं मृत्युरादाय गच्छति॥

हे पितः ! लोकेऽस्मिन् व्याधयो जरा दुःखानि मृत्युश्च न कमपि त्यजन्ति । सर्वोऽपि जीवः ह्येतेषां पाशे पतति । तर्हि कथं भवान् स्वस्थ इव तिष्ठति ? कथं च भवतो मोक्षसाधने सत्यान्वेषणे आत्मकल्याणे च मन्थरा प्रवृत्तिः ? हे तात ! जगत्यामिह जातमात्रमेव जीवमन्तको लक्षयति । सर्वमपि स्थावरजङ्गमं व्याधयो जराश्चाक्रमन्ते । नेह समायान्तीं मृत्युसेनां कोऽपि वारयितुं शक्नोति । सत्यमेव रक्षितुं प्रभवति केवलम् । सत्यं खल्वमृतम्, न कोऽपि पीयूषं प्राश्य मृत्युमुखं प्रयाति । ग्रामे वसतां गृहासक्तिमतां पुत्रेषु दारेषु च या रतिः, सा खलु निबन्धिनी रज्जुः । सुकृतिनः छिन्दन्तीमाम् पापास्तु नैनां छेत्तुं प्रभवन्ति । ते हि बद्धा विषीदन्ति । यः सत्त्वानि न हिंसति, मनोवाक्कर्महेतुभिः परेषां कल्याणं च कामयते, अन्येषां जीविकां नापहरति, स सत्यकामो भवितुमर्हति ।

तस्मात् सत्यव्रताचारः सत्यव्रतपरायणः ।
सत्यकामः समो दान्तः सत्येनैवान्तकं जयेत् ॥

हे तात ! देहेऽस्मिन् अमृतं मृत्युश्चेति द्वयमपि प्रतिष्ठितम् । तत्र सत्येनामृतमाप्यते, मोहाच्च मृत्युं लभते जीवः । अहं तु सत्यव्रतो भूत्वा कामक्रोधलोभमोहमदादिवर्जितः, अहिंसकः, भूतानां क्षेमकामश्च मृत्युं जेष्यामि ।

सोऽहं दान्तः शान्तो मुनिर्भूत्वा मनसा वाचा कर्मणा च भूतानां हितमाचरन् सत्येन पथा चरिष्ये । नाहं पशुपक्षिदानैः

यज्ञैः यष्टुं कामये, नापि च पैशाचैः हिंसकैः क्षत्रयज्ञैश्च। अहं तु ब्रह्मचारी सन् आत्मयज्ञो भविष्यामि। न मां प्रजाः पुत्राः वा तारयितुं क्षमाः इति मन्ये। यस्य योगिनः वाङ्मनश्चैकाग्र्ये स्तः, तस्यैव तपः त्यागः योगश्च सिद्ध्यन्ति। अहं च पुनः अध्यात्मविद्याः अधीत्य ज्ञानयज्ञं करिष्यामि। नहि ज्ञानेन सदृशं पवित्रमिह विद्यते। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः। ब्रह्मविद्या हि ज्ञानम्। सा तु सर्वाणि ज्ञानानि अतिवर्तते।

नास्ति विद्यासमं चक्षुर्नास्ति विद्यासमं फलम्।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम्॥

समत्वं, सत्यपरायणता, सदाचारता, सौशील्यम्, शमः, आर्जवम्, सन्तोषश्च ब्राह्मणस्य धर्माः सन्ति। नाहं स्वधर्मं विहाय किमपि कर्तुं कामये। ब्राह्मणस्य तु देहोऽयं क्षुद्रकामाय नेष्यते।

हे तात! मरणशीलस्यास्य जीवस्य धनैः धान्यैः बान्धवैः दारैः पुत्रैर्वा किं सेत्स्यति? किमेते म्रियमाणं तं रक्षिष्यन्ति? 'सम्मीलने नयनयोर्नहि किञ्चिदस्ति' इति लोकोक्तेः। अतएव हे पितः! आत्मनि आत्मानं ध्यायन्, अन्विच्छ स्वात्मानम्। यथा ते पितरः, पितामहाश्चापि अकुर्वन्। 'महाजनो येन गतः स पन्थाः' इति।

भीष्म उवाच—

पुत्रस्यैतद् वचः श्रुत्वा यथाकार्षीद् पिता नृप।
तथा त्वमपि वर्तस्व सत्यधर्मपरायणः॥

# साधूनां दर्शनं पुण्यम्

अस्ति मुम्बापुर्यां महानगर्यां वत्सराजो नाम कश्चित् महाधनो वणिक्। धनकुबेरस्य तस्य सुशीला पतिव्रता च धर्मपत्नी चिरं पुत्रं नाजीजनत्। ततो बहुभिः व्रतैः उपचारैः बलिभिः दानैः धर्मैश्च प्राप्तपुण्यपुञ्जस्य तस्य चरमे वयसि पुत्रोऽजायत। पुत्रस्य जन्मनि स महान्तमुत्सवमकरोत्, अददात् दानानि, मित्राणि सम्बन्धिनश्च सर्वान् विविधानि व्यञ्जनानि अजेमयत्, अयच्छच्च वस्त्राणि भूषणानि च तेभ्यः। सत्य-नारायणः इति स पुत्रस्य नाम अकरोत्।

नित्यं पितृभ्यां लालितः शिशुः स सत्यनारायणः सुखेन ववृधे स्म। जानुभ्यां रिङ्गमाणः स उद्भिद्यमानदन्तपंक्तिना सुन्दरेण हसता मुखेन पितरौ परिकरं च प्रसादयति स्म। ततः पाञ्चवार्षिकः स बालमित्रैः बहुविधाः क्रीडाः अकरोत्। तं वीक्ष्य माता पिता च प्रीततरौ अजायेताम्।

अथ स्निग्धः पिता षाड्वार्षिकं तमात्मजं विद्यासु निपुणयमानः पाठशालामनयत्। तत्र च बुद्धिमान् बालः सत्य-नारायणो गुरूणां प्रीतिमावहत्। अनायासेनैव स लेखन-पठनसङ्कलनव्यवकलनज्ञानमर्जित्वा प्रतिवर्षमुत्तीर्णो भूत्वा वर्गादग्रिमं वर्गमविशत्। कक्षायां सर्वेषु विषयेषु लब्धवैशिष्ट्यो-ऽपि गुणगणशालिनोऽपि केषांचित् मन्दबुद्धीनां कक्षामित्राणां सङ्गत्या सः 'बालस्वभावात् क्रीडाप्रियः' इति न्यायेन खेलानां

अजायत । सर्वेष्वऽपि खेलप्रकारेषु तस्य समानं सौख्यमासीत् । क्रीडाङ्गणे तस्याग्रगं नाम समादरश्चाभवत् । 'खेलने व्यापारे चासत्यदोषोऽपराधाय न कल्पते' इति केभ्यश्चित् शिक्षितंमन्येभ्यः श्रावं श्रावं तस्याऽसत्यदोषभीतिरनश्यत् । सोऽसत्यवचनाभ्यासी समवर्तत । अभ्यासवशात् स व्यवहारेष्वपि सदैवाऽसत्यं भाषते स्म । इति सोऽसत्यभाषणप्रकृतिरजायत । सञ्जाताऽसत्यस्वभावः स सदैवासत्यमेवाऽवदत् । ततः स कुमारः रङ्गभूमिषु संजातसौख्यः नृत्येषु गानेषु पानगोष्ठीषु च सञ्जातानुरागः नटविदग्धूतगायकसमाजेषु बहूनि धनानि व्यगमयत् । ततः पितरि उपरते स मातरं धर्षयित्वा गृहाद् धनानि भूषणानि चादाय नटविद्गायकेभ्योऽददात् ।

अथ प्रवृद्धा तस्य क्रीडासक्तिः पतङ्गोड्डायने विशेषेण दाढर्यमबध्नात् । मकरसंक्रान्तौ समायातायां स एकदा पतङ्गोड्डायने प्रसक्तः आत्मानं व्यस्मरत् । वयस्यैः सह पतङ्गमुड्डापयतः अभुक्तस्यैव तस्यानेकवारं सर्वं दिनमगच्छत् ।

एकदा तस्य बहूनि पतङ्गानि द्वन्द्वे भिन्नानि विनष्टानि च, तेनापि चान्येषामसंख्येयानि पतङ्गानि खण्डितानि क्षिप्तानि विजितानि च ।

अस्मिन्नन्तरे दोरकाद् भिन्नं तस्य पतङ्गं सुदूरं वाराणङ्गायास्तटे ध्यानावस्थितस्य कस्यचित् तापसस्य अङ्केऽपतत् । सत्यनारायणोऽपि च तदनुधावन् महात्मानमुपागच्छत् । तस्मिन्नेव क्षणे साधोः समाधिः भिन्नोऽभवत् । शान्तास्निग्धाभ्यां

चक्षुर्भ्यां स सुकुमारं तं श्रेष्ठिसुतमपश्यत् । सविनीतभावेन पतङ्गं गृह्णानो महात्मानं प्राणमत् । 'कस्त्वं वत्स ? प्रदोषे सम्प्राप्तोऽसि ? इति प्रीतेनेव स्वरेण साधुरपृच्छत् । 'महाराज ! श्रेष्ठिवत्सराजस्य पुत्रोऽहं सत्यनारायणः' इति कुमारोऽवदत् ।

अहो ! धर्मशीलस्य श्रेष्ठिवत्सराजस्य पुत्रोऽसि त्वम् ? प्रवर्तते कच्चित् धर्मप्राणस्य ते पितुः व्यापारो यथापूर्वम् ? नास्ति तस्य काचिद् धर्महानिः ? अपि वर्तते सर्वस्य परिजनस्यानामयम् ? कथय किमर्थमागतोऽसि सन्ध्यासमयेऽधुनेति । तत्र भवतः प्रसादात् सर्वं कुशलमनामयं चास्ति ख्याते पितुः । अहमत्र दोरकभिन्नं मम पतङ्गमनुयातोऽस्मि । इदानीं रात्रिर्जातेति भवदाश्रमे एवाश्रयं कामये । कृपयतु भवान् रात्रियापनाय दत्त्वा स्थानम्, इति सत्यनारायणः प्रार्थयत् ।

'अतिथिरसि वत्स ! आस्व आसनेऽस्मिन्' इति तापसोऽवादीत् । ततः साधुः आश्रमे तस्य भोजनव्यवस्थां विधाय, स्वयं च भोजनं कृत्वा शिष्यैः सहोपविष्टः तं श्रेष्ठिकुमारं तदीयं वृत्तान्तं पुनरपृच्छत् ।

महात्मनो दर्शनादेव सञ्जातश्रद्धः सोऽश्रुपूरितनेत्रः सन् सविनयं मुनिं नत्वा सर्वं स्वस्य वृत्तान्तमवर्णयत्, प्रार्थयच्च तम्— 'हे भगवन् ! इदानीं शरणमस्मि । शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ।'

तापसश्च—मा शुचो वत्स ! यथा त्वमिदानीं मम समक्षे सत्यं वदसि, तथैव सर्वदा सत्यं वक्तुं कृतप्रतिज्ञो भव । सत्यभाषणेन सर्वे दोषा नाशमेष्यन्ति ।

सूनृतं सर्वशास्त्रार्थनिश्चितज्ञानशोभितम् ।
भूषणं सर्ववचसां लज्जेव कुलयोषिताम् ॥

इत्याशिषो व्याहरत् ।

सत्यभाषणाय कृतप्रतिज्ञः सत्यनारायणस्तु महात्मनो वचनं हृदि निधाय तत्रैवाश्रमे रात्रिं नीत्वा प्रातरुत्थाय गृहमगच्छत् । ततः स पानपात्रमादाय शौण्डिनीगृहं प्रातिष्ठत । मार्गे तस्य मातुलोऽमिलत् । क गच्छसीति पृष्टः स साधोराश्रमे बाणगङ्गायास्तटे सत्यभाषणे कृतप्रतिज्ञो मौनमतिष्ठत् न्यवर्तत च तेनैव सार्धं पुनर्गेहम् । अन्येद्युः द्यूतं रन्तुं कृतमनाः स धनमादाय गृहान्निरसरत् । मार्गे तस्य पितृव्यो मिलितः । 'क गच्छसि' इति तेन पृष्टः स सत्यमुत्तरं दातुमशक्तः प्रतिज्ञाभङ्गभयात् असत्यम्, लज्जया सत्यमपि च वक्तुं न प्राभवत् ।

इत्थं च सत्यप्रतिज्ञस्य तस्य सर्वे दोषा व्यनश्यन् । ततश्च विनष्टपापस्य तस्य हृदि दिव्यं तेजः उदियाय । परमेश्वरोपासनायां दत्तचित्तः सोऽशेषाणां कल्याणानां भाजनं भूत्वा कृतकृत्यमात्मानं मन्यते स्म । छात्राः यूयमपि सज्जनान् विदुषः संगच्छध्वम् । तेषां सङ्गतेन सद्यः एव युष्माकं सर्वे दोषा नंक्ष्यन्ति गुणोदयाश्च फलिष्यन्तीति कवयो वदन्ति—

साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ।
कालेन फलते तीर्थं सद्यः साधुसमागमः ॥

# दानशौण्डः कर्णः

पौषस्य पूर्णिमायाः प्रातरासीत्। महाराजस्य धृतराष्ट्रस्य सारथिः अधिरथः स्नातुं यमुनामगच्छत्। स नद्याः शान्ते प्रवाहे वहन्तीं काष्ठमञ्जूषामपश्यत्। स तामादाय तटमनयत् अपश्यच्चोद्घाट्य ताम्, सद्यःप्रसूतमद्भुतं शिशुम्।

शिशोः सुन्दरे मुखे गुरुतरं तेजः आसीत्। तस्य कर्णयोः दीव्यन्ती कुण्डले शरीरे च द्योतमानं रत्नकवचं चाभवत्। 'अहो दिव्योऽयं शिशुः' इत्याश्चर्यचकितः स तमादाय गृहमागच्छत्।

अज्ञातपुत्रा आसीत् तस्य धर्मपत्नी राधा। स तं शिशुं तस्या अङ्के निधाय 'एष ते पुत्रो भविष्यति' इत्यवादीत्। प्रसन्ना च सा तमद्भुतं बालं लब्ध्वा महता स्नेहेन पुत्रवद् अपुष्णात्। बालः स सूतपत्नीं तां राधाम्, सारथिं च तं पितरौ अजानात्। वसुषेणः इति तौ तस्य नाम अकुर्वाताम्। लोकास्तु कर्णयोः कुण्डलधरं तं कर्णमाहुः।

द्रोणाचार्यः कौरवाणां पाण्डवानां च गुरुरासीत्। स तान् शास्त्रविद्यां शस्त्रकौशलं चावेदयत्। यदा तदा राजरथवाहकेन पित्रा सह राजभवनं गतः स कर्णः राजकुमारान् अपश्यत्, अखेलत् च संजातपरिचयैस्तैः सार्धम्। बहुधा स शिष्यान् शिक्षयमाणं गुरुं द्रोणाचार्यं सादराभ्यां निशातवाभ्यां नेत्राभ्यां न्यभालयत्। श्रुतमात्रपरः मनीषी स कर्णः

अचिरादेव शस्त्रविद्यानैपुण्यमवाप्नोत्। अनन्तरं पाठशाला-समयात् स तैः राजकुमारैः सह क्रीडन् विविधं बाणसञ्चालन-कौशलमदर्शयत्, गुणानुरागिणो राजकुमाराः तस्मिन् संजा-तानुरागाश्चाभवन्।

एकदा गुरुः द्रोणाचार्यः धनुर्विद्यायां शिष्याणां परीक्षा-मकरोत्। प्रदर्शनशाला रचिताऽभवत्। राजपुरुषाः अन्ये चापि द्रष्टुमागच्छन्। आरब्धा परीक्षा। राजकुमाराः धनुष्षु बाणानुसन्धानान् अकुर्वन्। मुक्ता अभवन् लक्ष्याणि विहाय यत्र तत्र शराः। युधिष्ठिरादयः पाण्डवाः, दुर्योधनादयः कौरवाश्चापि सर्वेऽनुत्तीर्णाः आसन्। कुमारः कर्णोऽपि सोत्सु-कस्तत्र दर्शकेष्वतिष्ठत्। तस्य हस्ते धनुः स्कन्धे च तूणीर-मासीत्। कौतुकाविष्टेन गुरुणानुमतः सोऽग्रतो गत्वाऽर्जुनस्य स्पर्धामकरोत्। विविधं बाणविक्षेपकौशलमदर्शयत् पाण्डवेयः। कर्णस्तु ततोऽप्यधिकं शरवर्षणनैपुण्यमदर्शयत्। सर्वे दर्शका अपरिचितस्य कुमारस्य शस्त्रवैचक्षण्यं वीक्ष्य साश्चर्याः करतल-ध्वनिमकुर्वन्। हृष्टा अभवन् कौरवाः। कर्णस्य प्रशंसा अभवन्।

अस्मिन्नन्तरे भीमसेन उत्थायाऽब्रवीत्—सर्वथा अज्ञात-कुलशीलोऽयं धनुर्धरः कुमारः। ददातु तावदयं स्वपरिचयम्। कस्मिन् राजकुले समुत्पन्नोऽयम्, कां च राजपुत्रीं जन्मना-नुगृह्णाति? अन्यथा सूतपुत्रोऽयं राधेयः पाण्डववंशभूषणस्य राजकुमारस्यार्जुनस्यान्यस्य वा कस्यापि स्पर्धां कर्तुं नार्हति।

अनेन तीव्रेणापमानेनातिदुःखितः कर्णः परावृत्य तूष्णी-मतिष्ठत्। तदा कर्णस्यापमानमसहमान इव दुर्योधनः उत्था-

प्राभाषीत्—नायं न्याय्यं भाषते भीमसेनः। न कोऽपीह जन्मना लघुर्महान् वा भवति। मानुषस्य गुणाः कार्याणि च तं लघुं महान्तं च कुर्वन्तीति मन्येऽहम्।

नहि जन्मनि ज्येष्ठत्वं ज्येष्ठत्वं गुण उच्यते।
गुणाद् गुरुत्वमायाति दधि दुग्धं घृतं यथा॥

अहमस्य कुमारस्य गुणैः शौर्येण चावर्जितोऽस्मि। अहमिमं कुलीनं राजानं च कर्तुं कामये। अहमेनमद्यैव अङ्गप्रदेशस्य राजानं करोमि। अद्य प्रभृत्येष राजसु गणितो भविष्यति।

अनया घटनया कर्णः कौरवाणां प्रियताम्, पाण्डवानां च शत्रुतामभजत्।

ततो गच्छत्सु कतिपयवर्षेषु पाञ्चालाधिपतिः द्रुपदः स्वात्मजायाः द्रौपद्याः स्वयंवरमहोत्सवमतानीत्। सर्वे राजानः राजकुमाराश्च तत्रोपातिष्ठन् तत्र च रङ्गभूमौ स राजा तुङ्गं लोहस्य स्तम्भं न्यखानयत्। तस्योपरिष्टाद् भ्रमति चक्रे मत्स्यो विन्यस्त आसीत्। तलस्थले च तैलपूरितं महाकटाहमभवत्। यो राजकुमारः तैले पश्यन् मत्स्यस्य नेत्रं भेत्स्यति, स एव द्रौपदीं परिणेष्यति, इति विवाहस्य राजकृतः पणः आसीत्।

दूरदूराद् आयाताः राजानो महाराजाः राजकुमाराश्चास्यां परीक्षायामसफला अभवन्। अङ्गदेशाधिपः कुमारः कर्णोऽपि तत्रागच्छत्। स लक्ष्यं वेद्धुं रङ्गभूमौ प्राविशत्। तं दृष्ट्वा 'नाहं दासीपुत्रेणानेन विवाहं करिष्यामि' इति कुमारी द्रौपदी तं न्यषेधीत्। इत्यपमानितः कर्णः क्रोधेन ज्वलन् स्वगृहमयासीत्।

ततो ब्राह्मणवेषं विधाय तत्र स्थितानां पाण्डवानां मध्याद् प्रकटितोऽर्जुनो मत्स्यनेत्रमाविध्य द्रौपदीं व्यवाहयत्।

अनेनापमानेन सुतरां क्रुद्धः कर्णः कौरवाश्चापि पाण्डवैः वैरमन्वबध्नन्। मायावी दुर्योधनो विविधैः उपायैः पाण्डवान् हन्तुं प्रायतत। राज्यान् निर्वासिता अपि ते बहूनि दुःखान्यनुभूय पुनरागताः तेन 'सूच्यग्रं नैव दास्यामि विना युद्धेन केशव' इत्युत्साह्य युद्धाय एव समाहूताः। अन्ततो गत्वा महाभारतं नाम महायुद्धमभवत्।

युद्धे च हतेषु कृपभीष्मद्रोणाचार्यादिषु महारथेषु दुर्योधनो महारथं कर्णमेव सेनाधिपमकरोत्। कर्णश्च यज्ञपशूनिव समहन् शूरान्। सोऽसंख्यं पाण्डवसैन्यं प्रथमे एव दिवसे संजघान। अर्जुनोऽपि कर्णस्य संहननं न सेहे। पराजयभीत्या चकम्पे पाण्डवदलम्। श्वः किं भविष्यतीति सर्वे शोकसंविग्नमानसा बभूवुः पाण्डवेयाः।

भगवान् श्रीकृष्णः पाण्डवानां मातरं कुन्तीं शिक्षित्वा कर्णस्य समीपं प्रास्थापयत्। कर्णः तस्याः स्वागतमकरोत्, व्याहरच्च—आगच्छ देवि! नमामि भवतीम्।

कुन्ती—मैवं वत्स! न मां देवीम्, अपि तु मातरं जानीहि।

कर्णः—मातरम्!

कुन्ती—आम्, वत्स! कर्ण! अहं तव माता अस्मि! त्वं ममोदरात् जातजन्माऽसि, इत्यवेहि।

कर्णः—नहि, नहि, मम माता तु राधाऽस्ति।

कुन्ती—नहि, वत्स ! राधा तव धात्री आसीत्, मां तु ते जननीं जानीहि। शृणु कथयामि ते जन्मकथाम्।

यदा पितुः गेहेऽहं बालिकाऽऽसम्। तदैकदा दैवयोगाद् दुर्वासा मुनिस्तत्रायात्। मम कृतेनातिथ्येन सन्तुष्टः सर्वज्ञः स मुनिः मां सूर्यदेवस्य मन्त्रमपाठयत्। तस्य जपेन सूर्यदेवता मयि प्रीतोऽभवत्। तस्य च प्रसादेन कुमार्येवाहं तव माताऽभवम्। ततो लोकापवादेन भीता च हृदि प्रस्तरं त्वां च मञ्जूषायां निधाय नद्यामवाहयम्। साहमद्य मम पुत्रोऽसीति मत्वा त्वामनुबध्नन् 'भ्रातॄणां पक्षे आमिल' इत्यर्थये।

आश्चर्यचकितः कर्णः जननीवचनमाकर्ण्य क्षणं मौनमतिष्ठत्। ततो विचार्य सोऽकथयत्—लोकभयेन भवत्या त्यक्तोऽहं राधया पालितोऽस्मि, इति तामेवाहं मन्ये मातरम्। राधेयोस्मि इति मे प्रत्ययः। दुर्योधनश्चेदानीं मम शरणम्। स मां राजानमकरोत्। नाहं कदापि तं हातुमुत्सहे। भवती च ममत्वेन मामनुग्रहीतुमायातेति सम्मानयामि त्वाम्। युद्धे च नाहं भवत्याः पुत्रेष्वर्जुनं विना कमपि संप्रहरिष्यामि। इदमाकर्ण्य महाराज्ञी कुन्ती अपमानदुःखितेन सीदता मनसा न्यवर्तत गृहम्।

महान् दाताऽभूद् राजा कर्णः।

दानेन भूतानि वशीभवन्ति<br>
दानेन वैराण्यपि यान्ति नाशम्।<br>
परोऽपि बन्धुत्वमुपैति दानैः<br>
दानं हि सर्वव्यसनानि हन्ति ॥

इत्यासीत् तस्याभिमतम् । स सर्वेभ्योपि याचकेभ्यो यथेच्छं ददाति स्म। न कोऽपि अनवाप्तमनोरथः तस्य गृहात् निवर्तते स्म । अन्यस्मिन् दिने उपायं चिन्तयित्वा पुत्रस्यार्जुनस्य कल्याणकामनया ब्राह्मणवेषं विधाय कर्णात् कुण्डले कवचं च ग्रहीतुं देवेशः तमुपैति स्म। जानन्नपि च दानशौण्डः कर्णः स्वस्य रक्षाकवचं कुण्डले च तस्मै प्रायच्छत्।

अर्जुनः कर्णस्य रक्षोपाये कुण्डले कवचं च धृत्वाऽयुद्ध्यत्। रणाङ्गणे सः, एहि भोः! सूत-पुत्र! इदानीं पश्यामि त्वाम्। इत्यर्जुनस्य धर्षणामसहमानः कर्णः—आगच्छ, महायोधिन्! देहि प्राणान्, हन्मि त्वां ससैन्यम्। विस्मराऽधुनाऽऽत्मश्लाघाम्, संस्मर च स्वस्य प्रियं रक्षकं च।

सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम्।
दैवायत्तं कुले जन्म ममायत्तं तु पौरुषम् ॥

इत्युक्त्वा स शंखध्वनिना सार्धमर्जुनस्य रथे बाणान् अवयत्। तदा चिरं युद्ध्वा द्वावपि वीरौ आहतौ अभवताम्। अन्तेऽर्जुनः कवचेन रक्षितः कर्णमवधीत्।

महारथो दानवीरः कर्णः युद्धे वीरगतिमगच्छत्। मृतोपि सोऽमरमकरोत् स्वस्य नामधेयम्। स यशसा चिरं जीविष्यति। प्रातः स्मरन्ति लोकास्तस्य नामधेयम्। गुणैः लघुरपि महान् भवितुमर्हति, अनाथोऽपि नाथवान् भवतीति महादानी राजा कर्णो निदर्शनम्। इदमत्र युज्यते वक्तुम्—

शतेषु जायते शूरः सहस्रेषु च पण्डितः।
वक्ता दशसहस्रेषु दाता भवति वा न वा ॥

गत १४ वर्षों से प्रकाशित अपने क्षेत्र का अद्वितीय
संस्कृतमासिकपत्र
संस्कृत को सरल, सुलभ, सर्वग्राह्य बनाने के लिए

# बालसंस्कृतम्

—आपके भारतीयत्व का पुष्ट प्रमाण होगा।

—प्रारम्भिक संस्कृत छात्रों की कठिनाइयों को दूर करेगा।

—आपको हठात् संस्कृतानुरागी बनाएगा।

—सभी भारतीय भाषाओं को जोड़ने वाली कड़ी होगा।

— भारतीय संस्कृति और सभ्यता को सामने रखेगा।

—आपके व्यवहार ज्ञान की वृद्धि में सहायक होगा।

—आपको संस्कृत की सरलता और महत्ता का परिचय देगा।

आज ही ग्राहक बनिए! वार्षिकशुल्क पांच रुपए!

---

प्राप्ति स्थानम्—
बालसंस्कृतं कार्यालयः
आगरा रोड, घाटकोपर, बम्बई-७७

दिल्ली शाखा—
८०, फोटना रोड, नई दिल्ली-१

# अस्माकं प्रकाशनानि

| | | एकस्य प्रतेः मूल्यम् रु०न. |
|---|---|---|
| संस्कृतव्याहारः | भागाः १—५ | ०.७ |
| सप्त विभक्तयः | | ०.७ |
| पञ्च सन्धयः | | ०.७ |
| संस्कृतप्रवेशिका | भागाः १—३ | ०.७ |
| बालनीतिकथाः | भागाः १—८ | ०.६ |
| संस्कृतसोपानम् | भागाः १—३ | १.२ |
| प्रहेलिकाशतकम् | | ०.५ |
| समासाः | | ०.५ |
| संभाषा | भागाः १—५ | ०.६ |
| संभाषा English | भागाः १—५ | ०.६ |
| लौकिकन्यायरत्नमञ्जूषा | | २.२ |
| संस्कृतप्रबन्धचन्द्रिका | भागाः १—३ | १.२ |
| सुन्दरं संस्कृतम् | भागाः १—३ | ०.७ |
| भारतीयाः महापुरुषाः | | १.२ |
| कुमारसंभवम् | ( संक्षिप्तगद्यम् ) | ०.७ |
| रघुवंशम् | ( संक्षिप्तगद्यम् ) | ०.७ |
| बालरामायणम् | | ०.७ |
| लघुनिबन्धावली | | १.० |
| संस्कृतवर्णमाला | | १.० |
| कृदन्ताः | | ०.५ |
| शालेयसुभाषितानि | | ०.६ |

प्राप्ति स्थानम्—

बालसंस्कृतकार्यालयः

आगरा रोड, घाटकोपर, बम्बई-७७

दिल्ली शाखा—

८०, कोटला रोड, नई दिल्ली-१